॥ श्रीः ॥

शुक्लयजुर्वेदीयमाध्यन्दिनवाजसनेयिनां

# नित्यकर्म्मप्रयोगमाला.

श्रीबीकानेरराज्यान्तर्गतश्रीरत्नगढनिवासिगौड-
वंशावतंसनानानिबन्धकारक पं० वैद्य
श्रीचतुर्थीलाल ( चौथमल )
शर्मणा प्रणीता ।

सैव

क्षेमराज-श्रीकृष्णदासश्रेष्ठिना

मुम्बय्यां

( खेतवाडी ७ वीं गली खम्बाटा लेन )

स्वकीये "श्रीवेङ्कटेश्वर" (स्टीम्) मुद्रणयन्त्रालये

मुद्रयित्वा प्रकाशिता ।

संवत् १९६७, शके १८३२.

# प्रस्तावना ।

अयि श्रौतस्मार्तकर्मानुष्ठानप्रसक्तमानस—सच्चरित्रपवित्रिताखिलदिङ्मण्डलमहोदया विद्वांसः ! नैतदविदितं तत्रभवतां भवताम्, यत्किल करुणाकूपारेण भगवता परमेश्वरेण पुरुषार्थचतुष्टयसाधनोपयोगिकर्मानुष्ठानोद्बोधका वेदाः प्रजाश्रेयसे प्रादुर्भावयामासिरे इति । तत्र भारतीयाः केचन कर्मानुष्ठानपद्धतिं जानन्त्येव न, केचन ज्ञात्वापि नानुतिष्ठन्ति, परमनुष्ठानाभावाज्ज्ञानं न सप्रयोजनम् । यथा—" अन्तर्गतं तमश्छेत्तुं शास्त्राद्बोधोहि न क्षमः । यथा न नश्यति तमः कृतया दीपवार्त्तया ॥ " इति केचन नित्यादिकर्मानुष्ठानबद्धादरा अपि तत्कर्म पद्धतिनिबन्धमन्तरा क्लिश्यन्ति । तत्र यद्यपि मैथिलदाक्षिणात्यनिर्मिताः केचन ग्रन्थाः समुपलभ्यन्ते परन्तु गौडनिबन्धग्रन्थानां यवनराज्यकालतो लुप्तप्रायत्वात्तेषां तु तदभाव एव । अथ च येषु सर्वविषयज्ञातारो महान्तो विद्वांसो बहवः सन्ति तेषामन्यदीयनिबन्धतः कर्मकरणं किं न हास्यास्पदम् ? इति मनसि निधाय मया चतुर्थीलालभास्करनामा द्वादश निबन्धात्मको महानिबन्धो निबद्धः, तत्र चाष्टौ मुद्रिताः सन्ति ।

अयं च यथार्थनामा **नित्यकर्मप्रयोगमाला**नामकग्रन्थो निर्माय मया **मुम्बयीस्थ " श्रीवेंकटेश्वर "** यन्त्रालयाध्यक्षाय **क्षेमराज श्रीकृष्णदास**श्रेष्ठिने समर्पितः । तेन च शोभनशीशकाक्षरैः पुष्टमसृणपत्रेषु संमुद्रय प्रकाश्यते तदेतद्ग्रहणकर्मानुष्ठानादिनाऽनुगृह्णन्तु महात्मान इति भृशमभ्यर्थयते—

**पण्डितचतुर्थीलालशर्मा,**

# सूचनापत्रम् ।

विदित हो कि हमारे प्राचीन गौडमहानिबंध मुसलमानोंके कारणसे नष्टप्राय हो गये केचित् शेष भी रहे सो मैथिल, दाक्षिणात्योंने उन्हीं ग्रंथोंसे अपने २ सांप्रदायिक ग्रंथ बनाके लोप कर दिये और हमारे गौड पण्डितोंके शिथिल रहनेसे तथा विद्याका प्रचार कम होनेसे भी प्राचीन निबंध लुप्त होगये आजकल सर्वत्र मैथिल सांप्रदायिक ग्रंथ जैसे श्राद्धविवेक, शुद्धिविवेक, आचारादर्श, पितृभक्ति इत्यादि और दाक्षिणात्यनिबंध जैसे निर्णयसिन्धु, धर्मसिंधु, व्रतराज, कमलाकर, प्रयोगरत्न, शांतिसार आदि प्रचलित हो रहे हैं, हमारे गौड भाई उन्हींसे काम चलाते हैं और अपने पितृ पितामहादि शिष्टोंके हस्तलिखित प्राचीन पद्धतियोंको बांध बांधकर रख दिये हैं तथा आपसमें वादविवाद करके दूसरे ग्रंथोंकी उन्नति करतेहैं और अपनी गौडसंप्रदायको रसातलमें डुबो रहेहैं यह बडे दुःखकी बात है हम लोगोंमें अच्छे अच्छे विद्वान् इससमय हैं परंतु अपनी विशेष आयु केवल शुष्क व्याकरण तथा तर्क वादविवादमें ही व्यय करते हैं यदि व्याकरण आदि पढके वेद, मीमांसा, धर्मशास्त्र, कर्मकांड आदिकोंमें चित लगावें तो गौडसंप्रदायका उद्धार होना कुछ कठिन नहीं है हमें आशा है कि हमारे सुयोग्य गौड पंडितगण इस प्रार्थनापर ध्यान देके निज ग्रंथोंका, निज सांप्रदायका जीर्णोद्धार अवश्य करेंगे और हमने गौड भाइयोंकी उन्नतिके अर्थ चातुर्थीलालभास्कर नाम महानिबन्ध अनेक

कर्मकांडपद्धतियोंसे शोभित बहुत बडा ग्रंथ संग्रह कियाहै जिसकी श्लोकसंख्या प्रायः पचहत्तर हजार७५००० होगी, जिसमें १२ ग्रंथ हैं जिनमेंसे ८ निबंध छपके प्रकाशित होचुके हैं शेष भी समयानुकूल ईश्वर चाहेंगे तो शीघ्रही प्रकाशित हो जावेंगे।

और जिन महाशयोंने इस मेरे परिश्रमको देखके धन्यवाद दिया है उनमेंसे थोडोंके नाम नीचे प्रकाशित किये जाते हैं शेष महाशयोंके समयानुसार किये जावेंगे—

| | |
|---|---|
| महामहो० श्री पं०शिवकुमारजी काशी. | पं० मनुलालजी वेदपाठी काशी. |
| पंडित श्रीगरुडध्वजजी कुरुक्षेत्र. | पं० रामभक्त वेदपाठी काशी. |
| पं० श्रीनानूरामजी शास्त्री रतनगढ. | पं० घनश्यामजी मिश्र सुजानगढ. |
| पं० गौरीशंकरजीवैद्य घोसावाकलकत्ता. | पं० कनीरामजी पौराणिक रामगढ. |
| पं० उमादत्तजी खंडेलवाल चूरू. | पं० कन्हैयालालजी चूरू. |
| पं० श्रीहरनंदरायजी निर्मल फतेपुर. | पं० जालीरामजी मिश्र फतेपुर. |
| पं० ज्वालादत्त निर्मल फतेपुर. | पं० गणपतजी किराडू बीकानेर. |
| पं० स्नेहीरामजी शास्त्री चिडावा. | पं० गोपीकृष्ण कथाव्यास बीकानेर. |
| पं० नंदलालजी सुरोलिया रामगढ. | पं० सदारामजी रामगढ. |
| पं० बालचंद्रजी शास्त्री रामगढ. | पं० भगवानदत्तजी रामगढ. |
| पं० छोटेलालजी शर्मा रतनगढ. | पं० हरनारायणजी करुथा. |
| पं० रामशरणजी शर्मा पहेवा. | पं० जीवानंदमिश्रअंग्रेजीशास्त्रीकलकत्ता |
| पं० रामजीदासजी धर्मशास्त्री बोहग्राम. | पं० रामचंद्रजी जोसी बिसाउ. |

**सूचनापत्रम् ।**

| | |
|---|---|
| पं० बलदेवजी नैयायक लक्ष्मणगढ. | पं० लक्ष्मीनारायणजी चोमवाल फतेपुर. |
| पं० विलासरायजी झुंझुणु. | पं० गणेशराम धरड रत्नगढ. |
| पं० रामजीलालजी चिडावा. | पं० दुर्गादत्तजी मिश्र सिरदारशहर. |
| पं० रामचंद्रजी अलवर. | पं० बैजनाथजी मिश्र बिसाउ. |
| पं० हीरालालजीशेखावाटीभूषणफतेपुर. | पं० रामचंद्रजी जोशी सीकर. |
| पं० नंदलालजी शास्त्री मुंबई. | पं० गोपीरामजी चोमवाल फतेपुर. |
| पं० उदमीरामजी वैयाकरण रतनगढ. | पं० घनश्यामजी चोमवाल फतेपुर. |
| पं० रमापति हुसियारपुर. | पं० किरधीचंद्र वैद्य लक्ष्मणगढ. |
| पं० श्रीधरशर्मा व्याख्यानरत्न पुष्करजी. | पं० किसनलालजी सलेमाबाद. |
| पं० घासीरामजी बोगड रत्नगढ. | पं० जयनारायणजी मिश्र फतेपुर. |

इत्यादि बहुतसे पंडितोंका धन्यवाद मिला है और हम इन महाशयोंको प्रसन्न अन्तःकरणसे धन्यवाद देते है, तथा सेठ खेमराजजी श्रीकृष्णदासजीको विशेष धन्यवाद देते हैं कि जिन्होंने निज द्रव्य व्यय करके ग्रन्थोंको प्रकाशित किया है ।

आपका प्रेमी–**पं० चतुर्थीलालजी गौड,**

मु० रत्नगढ राजश्रीबीकानेर.

॥ श्रीः ॥

# नित्यकर्मप्रयोगमालाविषयानुक्रमणिका.

# अनुक्रमणिका ।



इति नित्यकर्मप्रयोगमालाविषयानुक्रमणिका समाप्ता ।

# अथ माध्यंदिनानां-
# नित्यकर्मप्रयोगमाला ।

वंदे महेश्वरं शांतं सानंदं सुंदरं शिवम् ॥
श्रीशं गणेशं गिरिजां तपनं पितरौ तथा ॥ १ ॥
नत्वा विश्वेश्वरं स्वेष्टं दृष्ट्वा हरिहरादिकान् ॥
चतुर्थीलालशर्माहं करोमि शिवतुष्टये ॥ २ ॥

ग्रंथमिति शेषः । अथोच्यते गृहस्थस्य नित्यकर्म यथाविधि॥यत्कृत्वाऽनृण्यमाप्नोति दैवात्पैत्र्याच्च मानुषात् ॥३॥ अथात्र ब्राह्ममुहूर्तमारभ्यास्वापं कर्माण्युच्यंते ॥ ब्राह्मो मुहूर्तः संध्यापूर्वं दंडद्वयात्मकः ॥ आगमे ब्राह्मे मुहूर्ते चोत्थाय चिंतयेद्रघुनंदनम् ॥ श्रीपूर्व[१]

१ "श्रीजय राम जय जय" इति ।

जयमध्यस्थं द्विजेयातं विचक्षणः ॥ १ ॥ अत्र स्वापे प्रायश्चित्तं रत्नावल्याम्–ब्राह्मे मुहूर्ते या निद्रा सा पुण्यक्षयकारिणी। तां करोति द्विजो मोहात्पादकृच्छ्रेण शुद्ध्यति ॥ २ ॥

अथ प्रयोगः ॥ पूर्वोक्तब्राह्मे मुहूर्त उत्थाय स्वकरतलमवलोक्य गण्डूषत्रयं कृत्वा नेत्रे प्रक्षाल्य आचम्येष्टदेवतां नमस्कृत्य प्रातःस्मरणं कुर्यात ॥ तद्यथा–हे जिह्वे रससारज्ञे सर्वदा मधुरप्रिये। नारायणाख्यपीयूषं पिब जिह्वे निरंतरम् ॥ १ ॥ त्रैलोक्यचैतन्यमयादिदेव श्रीनाथ विष्णो भवदाज्ञयैव ॥ प्रातः समुत्थाय तव प्रियार्थं संसारयात्रामनुवर्तयिष्ये ॥ २ ॥ भारते–अनिरुद्धं गजं ग्राहं वासुदेवं महाद्युतिम्। संकर्षणं महात्मानं प्रद्युम्नं च तथैव च ॥३॥ मत्स्यं कूर्मं च वाराहं वामनं तार्क्ष्यमेव च ॥ नारसिंहं च नागेंद्रं सृष्टिसंहारकारकम् ॥४ ॥ विश्वरूपं हृषीकेशं गोविंदं मधुसूदनम् । त्रिदशैर्वंदितं देवं दृढभक्तिमनूपमम् ॥ ५ ॥ एतानि प्रातरुत्थाय

संस्मरिष्यंति ये नराः ॥ सर्वपापैः प्रमुच्यंते स्वर्गलो-
कमवाप्नुयुः ॥ ६ ॥ शिवादिचिंतनम्--प्रातः स्मरामि
भवभीतिहरं सुरेशं गंगाधरं वृषभवाहनमंबि-
केशम् । खट्वाङ्गशूलवरदाभयहस्तमीशं संसाररो-
गहरमौषधमद्वितीयम् ॥ १ ॥ प्रातर्नमामि गिरि-
शं गिरिजार्द्धदेहं सर्गस्थितिप्रलयकारणमादि-
देवम् ॥ विश्वेश्वरं विजितविश्वमनोभिरामं संसार-
रोगहरमौषधम० ॥ २ ॥ प्रातर्भजामि शिवमेक-
मनंतमाद्यं वेदांतवेद्यमनघं पुरुषं पुराणम् ॥ ना-
मादिभेदरहितं च विकारशून्यं संसार० ॥ ३ ॥
प्रातः समुत्थाय शिवं विचिंत्य श्लोकत्रयं येनुदिनं
पठंति ॥ ते दुःखजातं बहुजन्मसंचितं हित्वा पदं
यांति तदैव शंभोः॥४॥प्रातः स्मरामि भवभीतिमहा-
र्तिशांत्यै नारायणं गरुडवाहनमब्जनाभम् । ग्राहा-
भिभूतवरवारणमुक्तिहेतुं चक्रायुधं तरुणवारिज-
पत्रनेत्रम् ॥ १॥ प्रातर्नमामि मनसा वचसा च मूर्ध्ना
पादारविंदयुगलं परमस्य पुंसः । नारायणस्य नरका-

र्णवतारणस्य पारायणप्रवणविप्रपरायणस्य ॥ २ ॥ प्रातर्भजामि भजतामभयं करोति प्राक्सर्वजन्मकृतपापभयापहत्यै । यो ग्राहवक्त्रपतितांघ्रिगजेंद्रघोरशोकप्रणाशमकरोद्धृतशंखचक्रः ॥ ३ ॥ श्लोकत्रयमिदं पुण्यं प्रातरुत्थाय यः पठेत् ॥ लोकत्रयगुरुस्तस्मै दद्यादात्मपदं हरिः ॥ ४ ॥ ब्रह्मा मुरारिस्त्रिपुरांतकारिर्भानुः शशी भूमिसुतो बुधश्च । गुरुश्च शुक्रः शनिराहुकेतवः कुर्वंतु सर्वे मम सुप्रभातम् ॥ १ ॥ भृगुर्वसिष्ठः क्रतुरंगिराश्च मनुः पुलस्त्यः पुलहश्च गौतमः ॥ रैभ्यो मरीचिश्च्यवनश्च दक्षः कुर्वंतु० ॥ २ ॥ सनत्कुमारः सनकः सनंदनः सनातनोप्यासुरिपिंगलौ च ॥ सप्तस्वराः सप्तरसातलानि कुर्वंतु स० ॥ ३ ॥ सप्तार्णवाः सप्तकुलाचलाश्च सप्तर्षयो द्वीपवनानि सप्त ॥ भूरादिकृत्वा भुवनानि सप्त कुर्वंतु स० ॥४॥ पृथ्वी सगंधा सरसास्तथापः स्पर्शी च वायुर्ज्वलितं च तेजः । नभः सशब्दं महता सहैव कुर्वंतु स० ॥ ५ ॥ इत्थं प्रभाते परमं पवित्रं पठेत्स्मरेद्वा शृणुयाच्च तद्वत् । दुःस्वप्न-

नाशस्त्विह सुप्रभातं भवेच्च नित्यं भगवत्प्रसादा-
त् ॥ ६ ॥ पुण्यश्लोकजनस्मरणमाचारमयूखे–पु-
ण्यश्लोको नलो राजा पुण्यश्लोको जनार्दनः ॥ पुण्य-
श्लोका च वैदेही पुण्यश्लोको युधिष्ठिरः ॥ ७ ॥ अश्व-
त्थामा बलिर्व्यासो हनुमांश्च विभीषणः ॥ कृपः
परशुरामश्च सप्तैते चिरजीविनः ॥ ८ ॥ सप्तैतान्सं-
स्मरेन्नित्यं मार्कंडेयमथाष्टमम् ॥ जीवेद्वर्षशतं सोपि
सर्वव्याधिविवर्जितः ॥ ९ ॥ अहल्या द्रौपदी सीता
तारा मंदोदरी तथा । पंचकं ना स्मरेन्नित्यं महा-
पातकनाशनम् ॥ १० ॥ अविमुक्तचरणयुगलं
दक्षिणमूर्तेश्च कुक्कुटचतुष्कम् ॥ स्मरणमपि वाराण-
स्या निहन्ति दुःस्वप्नमपशकुनम् ॥ ११ ॥ पद्म-
पुराणे–उमा उषा च वैदेही रमा गंगेति पंचकम् ॥
प्रातरेव स्मरेन्नित्यं सौभाग्यं वर्धते सदा ॥ १२ ॥
सोमनाथो वैद्यनाथो धन्वंतरिरथाश्विनौ ॥ पंचैता-
न्स्मरतो नित्यं व्याधिस्तस्य न विद्यते ॥ १३ ॥
कपिला कालियोऽनंतो वासुकिस्तक्षकस्तथा ॥ पंचै-

तान्स्मरतो नित्यं विषबाधा न जायते ॥ १४ ॥ हरं हरिं हरिश्चंद्रं हनुमंतं हलायुधम् ॥ पंचकं वै स्मरेन्नित्यं घोरसंकटनाशनम् ॥ १५ ॥ रामं स्कंदं हनूमंतं वैनतेयं वृकोदरम् ॥ पंचैतान्संस्मरेन्नित्यं भवबाधा विनश्यति ॥ १६ ॥ आदित्यश्च उपेंद्रश्च चक्रपाणिर्महेश्वरः ॥ दंडपाणिः प्रतापी स्यात्क्षुत्तृड्बाधा न जायते ॥ १७ ॥ वसुर्वरुणसोमौ च सरस्वती च सागरः॥ पंचैतान्संस्मरेद्यत्र तृषा तत्र न बाधते॥१८॥ सनत्कुमारदेवर्षिशुकभीष्मप्लवंगमाः ॥ पंचैतान्स्मरतो नित्यं कामस्तस्य न बाधते ॥१९॥ रामलक्ष्मणौ सीता च सुग्रीवो हनुमान्कपिः ॥ पंचैतान्स्मरतो नित्यं महाबाधा प्रमुच्यते ॥ २० ॥ कर्कोटकस्य नागस्य दमयंत्या नलस्य च । ऋतुपर्णस्य राजर्षेः कीर्तनं कलिनाशनम् ॥ २१ ॥ वैन्यं पृथुं हैहयमर्जुनं च शाकुन्तलेयं भरतं नलं च । रामं च सीतां स्मरति प्रभाते तस्यार्थलाभो विजयश्च नित्यम् ॥ २२ ॥ छंदोगपरिशिष्टे–श्रोत्रियं शुभगां

गां च अग्निमग्निचितिं तथा । प्रातरुत्थाय यः पश्येदापद्भ्यः स विमुच्यते ॥ १ ॥ इत्यादिपुराणमंत्रान्पठित्वा ॥ समुद्रवसने देवि पर्वतस्तनमंडले । विष्णुपत्नि नमस्तुभ्यं पादस्पर्शं क्षमस्व मे ॥ १ ॥ इति प्रार्थ्योत्थाय रविं गुरुं तुलसीं गां च नमस्कृत्य शौचं कुर्यात् ॥ इति प्रातःस्मरणम् ॥

अथ मूत्रपुरीषोत्सर्गः ॥ तत्र क्रमः ॥ ग्रामाद्बहिर्नैर्ऋत्यामिषुविक्षेपात्यये शुद्धमृत्तिकां ससिकतां जलपात्रं चादाय कीटादिरहितस्थलं गत्वा मृज्जलपात्रे निधाय अयज्ञियैरनार्द्रैस्तृणैर्भूमिमाच्छाद्य प्रावृतशिराः पृष्ठतः कंठलंबितयज्ञोपवीत एकवस्त्रश्चेद्दक्षिणकर्णनिहितयज्ञोपवीतो मौनी घ्राणास्ये पिधाय दिवोदङ्मुखो रात्रौ दक्षिणामुखः प्राणबाधादिषु यथासुखमुखो वा मूत्रपुरीषे उत्सृज्य लोष्टादिना गुदं परिमृज्य गृहीतशिश्नश्चोत्थाय पूर्वगृहीतमृज्जलपात्रे गृहीत्वार्द्रामलकमात्रमृज्जलैर्द्विवारं लिंगशौचं कृत्वाऽर्धप्रसृतितदर्धार्धमृज्जलैस्त्रिवारमपानं संशोध्य पुनर्जलैरेव लिंगगुदे प्रक्षाल्य शुद्धमृत्तिकया एकवारं हस्तं प्रक्षाल्य

शुद्धभूमिमागत्य अन्यमृज्जलैर्दशवारं वामकरं प्रक्षाल्य ततः करद्वयं सप्तवारं तावद्भिरेवं मृज्जलैः प्रक्षाल्य वामदक्षिणपादौ प्रत्येकं त्रिः प्रक्षाल्य अन्यजलेन द्वादशगंडूषान्वामभागे कृत्वा जलपात्रं त्रिः पर्युक्ष्य उपवीती द्विराचामेत् ( मूत्रमात्रोत्सर्गे तु ) पूर्ववदेकवारं लिंगं प्रक्षाल्य वामकरं त्रिः प्रक्षाल्य करद्वयं द्विः प्रक्षाल्यैकैकया मृदा पादौ प्रक्षाल्य गंडूषचतुष्टयं विधायाचामेत् ॥ एवमेव मैथुने ज्ञेयम् ॥ इति शौचप्रकारः ॥

अथाचमनप्रयोगः ॥ शुचौ देशे भूमिष्ठपादोंतर्जानुहस्तः प्राङ्मुख उदङ्मुखो वा उपविश्य संहतांगुलिना शुद्धं जलं गृहीत्वा मुक्तांगुष्ठकनिष्ठेन पाणिना ब्रह्मतीर्थेन केशवनारायणमाधवेति संबुद्ध्यंतैस्त्रिभिर्नामभिस्त्रिः पिबेत् ॥ ततः करौ प्रक्षाल्य अंगुष्ठमूलेन ओष्ठौ संमृज्य तं प्रक्षालयेदित्याचमनम् ॥

अथ दंतधावनम् ॥ प्रतिपत्षष्ठी-अष्टमी-नवमी-एकादशी-चतुर्दशी-पंचदशी-संक्रांति-व्यतीपात-

व्रतोपवासश्राद्धदिनार्कदिनातिरिक्तदिनेषु ब्राह्मणो द्वादशांगुलप्रमाणेन क्षत्रियवैश्यौ तु दशाष्टाङ्गुलमानेन च कनिष्ठिकाग्रवत्स्थूलेन तिंतिण्यादिविहितवृक्षोद्भवेन चूर्णीकृताग्रेण प्रक्षालितेन शुष्केणार्द्रेण वा प्राङ्मुखो मौनेन दन्तधावनं कुर्यात्। प्रतिषिद्धदिनेषु च पर्णादिना तर्जनीवर्ज्यांगुल्या अपां द्वादशगण्डूषैर्वा दंतान्संशोधयेत् । दन्तधावनमंत्राः—ॐ अन्नाद्याय व्यूहध्वꣳ सोमो राजायमागमत् । स मे मुखं प्रमार्क्ष्यते यशसा च भगेन च इति ॥ ॐ आयुर्बलं यशो वर्चः प्रजाः पशुवसूनि च । ब्रह्म प्रज्ञां च मेधां च त्वं नो देहि वनस्पते ॥ १ ॥ इति मंत्रेणाभिमंत्र्य ॥ मुखदुर्गंधिनाशाय दंतानां च विशुद्धये । ष्ठीवनाय च गात्राणां कुर्वेहं दंतधावनम् ॥ १ ॥ इति मंत्रमुक्त्वा दंतान्संशोध्य जिह्वोल्लेखं च कृत्वा द्वादशगंडूषांश्च वामभागे कृत्वा ॐकारं गायत्रीं च स्मृत्वा स्नानं कुर्यात ॥ इति दंतधावनम् ॥

अथ स्नानप्रयोगः ॥ आचारादर्शे कात्यायनः—यथोक्तमृत्तिकामार्द्रं गोमयं कुशान्कृष्णतिलान्सुर-

भीणि पुष्पाण्यादाय सुमना नद्यादिकं गत्वा त-त्तीरे शुचौ देशे पृथक् पृथक् स्थापयेत । तदनंतरं सूर्याभिमुखस्तीर्थानि प्रार्थयेत् । ॐ पुष्कराद्यानि तीर्थानि गंगाद्याः सरितस्तथा । आगच्छंतु पवित्राणि स्नानकाले सदा मम ॥१॥ त्वं राजा सर्वतीर्थानां त्वमेव जगतः पिता ॥ याचितं देहि मे तीर्थं सर्व-पापैः प्रमुच्यते ॥ २ ॥ अपामधिपतिस्त्वं च तीर्थेषु वसतिस्तव ॥ वरुणाय नमस्तुभ्यं स्नानानुज्ञां प्र-यच्छ मे ॥ ३ ॥ गंगे च यमुने चैव गोदावरि सरस्वति ॥ नर्मदे सिंधुकावेरि जलेऽस्मिन्सन्निधिं कुरु ॥ ४ ॥ इति प्रार्थ्य ततः पाणिपादं प्रक्षाल्य नाभि-मात्रजलं गत्वा कुशहस्तो बद्धशिख आचम्य देशकालौ संकीर्त्य मम कायवाङ्मनःकृतकर्म-दोषपरिहारद्वारा श्रीपरमेश्वरप्रीत्यर्थं प्रातःस्नानं करिष्य इति संकल्प्य ॐ उरु १७ हिराजाव्वरु णश्चकारसूर्यायपंथामन्वैतवाऽउँ । अपदेपादाप्र तिंधातवेकरुतापं वक्ताहृदयाव्विधश्चित् । नमोव्वरु

णायाभिष्ठितो व्वरुणस्यपाशः इति न्युब्जांजलि-
हस्तेन तोयमामंत्र्य ॥ ॐ ये ते शतं व्वरुण ये सहस्रं
यज्ञियाः पाशा वितता महांतः। तेभिर्नो अद्य सवि
तोत व्विष्णुर्विश्वे मुंचंतु मरुतः स्वर्काः ॥ इति त्रिः
प्रदक्षिणं जलमावर्त्तयेत् ॥ ततः ॥ ॐ सुमित्रियानऽ
आपओषधयःसंतु इति जलांजलिमादाय ॐ इति
दुर्मित्रियास्तस्मैसंतुयोस्मांद्वेष्टि यंचव्वयं द्विष्मः
इति तीर्थतटे द्वेष्यं प्रति निषिंचेत्॥ततः कटिं बस्त्यू-
रु जंघे चरणौ प्रत्येकं मृत्तोयाभ्यां त्रिस्त्रिः प्रक्षा-
ल्य एकं पादं जलेऽपरं स्थले निधायाचामेत् ॥ ततः
उदकं नमस्कृत्य ॐ इदंविष्णुर्व्विचक्रमेत्रेधानि
दधेपदं समूढमस्यपाꣳसुरे स्वाहा इति मृत्तिक-
यांगानि संस्पृश्य नाभिमात्रं जलं प्रविशेत् ॥ ॐ
आपोअस्मान्मातरःशुंधयंतु घृतेननो घृतप्वः
पुनंतु विश्वꣳहिरिप्रंप्रवहंतिदेवीरिति मंत्रेण सू-

याभिमुखो निमज्जेत् ॥ ततः स्नात्वा । ॐ द्रुपदादिव मुमुचानः स्विन्नः स्नातो मलादिव पूतं पवित्रेणेवाज्यमापः शुन्धन्तु मैनसः ॥ आपो हिष्ठा० इति मंत्रेण गोमयेनांगानि विलिंपेत् ॥ ततो मार्जनम्—

(Note: The printed text on this page reads as follows, line by line:)

यांभिमुखो निमज्जेत् ॥ ततः स्नात्वा । ॐ उदिदांदिभ्युस्शुचिरापूत ऽएमि ॥ इति निमज्ज्योन्मज्ज्याऽऽचम्य ॐमानस्तोकेतनयेमान ऽआयुषि मानोगोषुमानोऽअश्वेषुरीरिषः ॥ मानो व्वीरान्रुद्र भामिनोवधीर्हविष्मन्तः सदमित्वाहवामहे इति मंत्रेण गोमयेनांगानि विलिंपेत् ॥ ततो मार्जनम्—ॐ इमम्मेंव्वरुणश्रुधीहवमद्याचमृडयत्वामवस्यु राचके ॥ १ ॥ ॐ तत्त्वायामिब्रह्मणावंदमानस्तदाशास्तेयजमानोहविर्भिः अहेडमानोव्वरुणेहबोद्ध्युरुशंठंसमानऽआयुःप्रमोषीः ॥ २ ॥ ॐत्वंनोऽअग्नेव्वरुणस्यविद्वान्देवस्यहेडोऽअवयासिसीष्ठाः यजिष्ठोवह्नितमः शोशुचानोविश्वाद्वेषांठंसिप्रमुमुग्ध्यस्मत् ॥ ३ ॥ ॐ सत्वन्नोऽअग्नेवमोभवोतीनेदिष्ठोऽअस्याउषसोव्युष्टौ ॥ अवयक्ष्वनोवरुणठंरराणोव्वी

हिमृडीकछंसुहवोनऽएधि ॥ ४ ॥ ॐ मापोमौषधीर्हिछँसीर्द्धाम्नोधाम्नोराजंस्ततोव्वरुणनोमुंच यदाहुरघ्न्याइति वरुणेतिशपामहेततोवरुणनोमुंच ॥५॥ ॐ उदुत्तमंव्वरुणपाशमस्मदवाधमंविमध्यमछंश्रथाय ॥ अथावयमादित्यव्रतेतवानागसोऽअदितयेस्याम ॥६॥ ॐमुंचंतुमाशपथ्यादथोव्वरुण्यदुत ॥ अथोयमस्यपड्वीशात्सर्वस्माद्देवकिल्बिषात् ॥ ७ ॥ ॐ अवभृथनिचुंपुणनिचेरुरसिनिचुंपुणःअवदेवैर्देवकृतमेनो यासिषमवमर्त्यैर्मर्त्यकृतंपुरुराव्णोदेवरिषस्याहि ॥ ८ ॥

इत्यष्टभिर्मंत्रैर्हस्तेन प्रत्येकं शिरसि जलं प्रक्षिपेत् ॥ ततो वहति जले प्रवाहाभिमुखः स्थिरे सूर्याभिमुखो मौनी मज्जेत् ॥ तत आचम्य वक्ष्यमाणैरोंकारादिभिर्मंत्रैः प्रतिमंत्रं कुशत्रयेण जलेन प्रदक्षिणमात्मानं पावयेत् ॥ ॐ पुनातु ॥ १ ॥ ॐ भूः पुनातु ॥२॥ ॐ भुवः पुनातु ॥ ३ ॥ ॐस्वः

पुनातु ॥ ४ ॥ ॐमहः पुनातु ॥ ५ ॥ ॐ जनः पुना
तु ॥ ६ ॥ ॐ तपः पुनातु ॥ ७ ॥ ॐ सत्यं
पुनातु ॥ ८ ॥ ॐ तत्सवितुरितिसर्वं पुनातु ॥ ॐ
आपोहिष्ठामयोभुवस्तानऽऊर्ज्जेदधातनमहेरणायचक्ष
से ॥ ६ ॥ योवः शिवतमोरसस्तस्यभाजयतेहनः
उशतीरिव मातरः ॥ ७ ॥ तस्माऽअरङ्गमामवो
यस्युक्षयायुजिन्वथ॥आपाजुनयथाचनः ॥ ८ ॥ ॐ
इदमापःप्रवहतावद्यञ्चमलञ्चयत् यच्चाभिदुद्रोहानृतं
यच्चशेपेऽअभीरुणम्॥आपोमातस्मादेनसः पवमानश्च
मुञ्चतु ॥ ९ ॥ ॐ हविष्मतीरिमाऽआपोहवि
ष्मा २ ॥ ऽआविवासतिहविष्मान्देवोऽअध्वरोहवि
ष्मा २ ॥ ऽअस्तुसूर्यः ॥ १० ॥ ॐ देवीरापोऽअ-
पान्नपाद्योवऽउर्म्मिर्हविष्यऽइन्द्रियावान्मदिन्तमः । तं
देवेभ्योदेवत्रादत्तशुक्रपेभ्योयेषांभागस्थस्वाहा ॥११॥

ॐ कार्षिरसिसमुद्रस्य त्वाक्षित्याऽउन्नयामिसमापोऽ अद्भिरग्मतसमोषधीभिरोषधीः ॥ १२ ॥ ॐ अपोदेवामधुमतीरगृभ्णन्नूर्जस्वतीराजस्वश्चितानाः ॥ याभिर्मित्रावरुणावभ्यषिंचन्याभिरिन्द्रमनयन्नत्यरातीः ॥ १३ ॥ ॐ द्रुपदादिवमुमुचानः स्विन्नः स्नातो मलादिवपूतंपवित्रेणेवाज्यमापः शुंधन्तुमैनसः॥ १४॥ ॐ शन्नोदेवीरभिष्टयऽआपोभवन्तुपीतयेशंयोरभिस्रवंतुनः ॥ १५ ॥ ॐ अपाᳬरसमुद्वयसꣳ सूर्येसन्तꣳ समाहितअपाᳬरसस्ययोरसस्तम्वोगृह्णाम्युत्तममुपयामगृहीतोसीन्द्रायत्त्वाजुष्टङ्गृह्णाम्येषतेयोनिरिंद्रायत्वाजुष्टतमम् ॥ १६ ॥ ॐ अपोदेवीरुपसृजमधुमतीरयक्ष्मायप्रजाभ्यः ॥ तासामास्थानादुज्जिहतामोषधयस्सुपिप्पलाः ॥ १७ ॥ ॐ पुनंतुमापि

तरं÷ सोम्यासं÷ पुनन्तुंमापितामहा॒ऽ पुनन्तुप्रपि॑तामहा॒ऽ पवित्रेणशतायुषा ॥ १८ ॥ ॐ पुनंतुंमापितामहा॒ऽ पुनंतुप्रपि॑तामहा ॑ पवित्रेणशतायुषाव्विश्वमायुर्व्यश्नवै ॥ १९ ॥ ॐ अग्नऽआयूᳫंषिपवसऽआसुवोर्ज्जमिषंचनः॥आरेबांधस्वदुच्छुनांम् ॥ २०॥ ॐ पुनन्तुंमादेवजनाः पुनन्तु मनसाधियं ÷ पुनन्तु विश्वाभूतानि जातवेदः पुनीहिमा ॥ २१ ॥ ॐ पवित्रेणपुनीहिमाशुक्रेणंदेवदीद्य ॥ तूअग्नेक्रत्वाक्रतूँ२॥ रनं ॥ २२ ॥ ॐ यत्तेपवित्रमर्च्चिष्यग्नेविततमंतराब्रह्मतेनपुनातुमा ॥ २३ ॥ ॐ पवमानः सोऽअद्यनःपवित्रेणविचर्षणिः ॥ यःपोतासपुनातुमा ॥ २४ ॥ ॐ उभाभ्यांदेवसवितःपवित्रेणसवेनंच॥ मांपुनीहिव्विश्वतं ÷ ॥ २५ ॥ ॐ वैश्वदेवीपुनतीदेव्यागाद्यस्यांमिमाबह्व्यस्तन्वोंव्वीतपृष्ठाःतयामदंतः

सधमादेषुव्वयᳯस्यामपतयोरयीणाम्।२६॥ॐचित्प तिर्मापुनातुदेवोमासवितापुनात्वच्छिद्रेणपवित्रेणसूर्य्यस्यरश्मिभिः तस्यतेपवित्रपतेपवित्रपूतस्ययत्काम ःपुनेतच्छकेयं॥२७॥एवं मार्ज्जनंकृत्वाॐअपाघमपकिल्बिषमपकृत्यामपोरपः अपामार्गत्वमस्मदपदुःष्व प्न्यᳯसुव॥ इतिमंत्रेणापामार्गैस्त्रिभिर्मार्जयेत्। तत ॐकाण्डात्काण्डात्प्ररोहंतीपरुषःपरुषस्परि॥ एवानो दूर्वेप्रतनुसहस्रेणशतेनच॥२८॥ इति मंत्रेण दूर्वाभिस्त्रिभिर्माजयेत्। ततः पूर्ववत् ॐइमं मे व्वरुणेत्यादिमंत्रैः शिरसि जलं निक्षिपेत्। ततः ऋष्यादिकं स्मृत्वाऽन्तर्जले मग्नोऽघमर्षणं द्रुपदां च आयं गौरिति वा ऋचं त्रिरावर्त्तयेत्॥ ॐऋतं च सत्यं चाभीद्धात्तपसोऽध्यजायत। ततो रात्र्यजायत ततः समुद्रो अर्णवः॥ समुद्रादर्णवादधिसंवत्सरो अजायत अहोरात्राणि विदधद्विश्वस्य मिषतो वशी॥ सूर्याचंद्र

मसौ धाता यथापूर्वमकल्पयत् । दिवं च पृथिवीं चान्त रिक्षमथो स्वः॥ सशिरसं प्राणायामं वा त्रिः कुर्यात्॥ यद्वा परमात्मानं विष्णुं शेषशायिनं सायुधं सश्रीकं ध्यायेत् ॥

ततस्तीर्थप्रार्थना । ॐ विष्णोः पादप्रसूतासि वैष्णवी विष्णुपूजिता ॥ पाहि नस्त्वेनसस्तस्मा-दाजन्ममरणांतकात् ॥ १ ॥ तिस्रः कोट्योऽर्धकोटी च तीर्थानां वायुरब्रवीत् । दिवि भुव्यंतरिक्षे च ता-नि ते संति जाह्नवि ॥ २ ॥ नंदिनीत्येव ते नाम देवे षु नलिनीति च ॥ वृंदा पृथ्वी च शुभगा विश्वकाया शिवासिता ॥ ३ ॥ विद्याधरी सुप्रसन्ना तथा लोकप्र-साधनी ॥ क्षेम्या च जाह्नवी चैव शांता शांतिप्रदा-यिनी ॥ ४ ॥ एतानि पुण्यनामानि स्नानकाले प्रकी-र्तयेत् । भवेत्संनिहिता तस्य गंगा त्रिपथगामिनी ॥ ५ ॥ नमामि गंगे तव पादपंकजं सुरासुरैर्वंदि-तदिव्यरूपम् ॥ भुक्तिं च मुक्तिं च ददासि नित्यं भावानुसारेण सदा नराणाम् ॥ ६ ॥ या गतिर्यो-

गयुक्तानां मुनीनामूर्ध्वरेतसाम् । सा गतिः सर्वजंतूनां जाह्नवीतीरवासिनाम् ॥ ७ ॥ इति पठित्वा नाभिमात्रजलं गतः सन् स्नानांगतर्पणं कुर्यात् ॥

अथ तर्पणप्रयोगः ॥ॐमोदस्तृप्यताम् ॥ १ ॥ ॐप्रमोदस्तृप्य० ॥ २ ॥ ॐसुमुखस्तृ० ॥ ३ ॥ॐदुर्मुखस्तृप्य० ॥ ४ ॥ ॐअविघ्नस्तृ० ॥ ५ ॥ ॐविघ्नकर्ता तृ० ॥ ६ ॥ ॐब्रह्मादयो देवास्तृप्यंताम् ॥ ७ ॥ ॐगौतमादय ऋषयस्तृप्यंताम् ॥ ८ ॥ इति देवतीर्थेन एकैकमंजलिं जले प्राङ्मुखः क्षिपेत् । अथोदङ्मुखो निवीत्यूर्ध्वज्ञुषः प्राजापत्येन तीर्थेन सनकादींस्तर्प्पयेत् । ॐसनकादयोमनुष्यास्तृप्यंताम् ॥ २ ॥ ततोपसव्यं दक्षिणाभिमुखः पितृतीर्थेन कृष्णतिलोदकैः कव्यवाडनलादींस्तर्पयेत् ॥ ॐकव्यवाडनलादयो देवपितरस्तृप्यंताम् ३ ॥ ( इति त्रयोंजलयः ) ॐअस्मत्पितृपितामहप्रपितामहास्तृप्यंताम् ३ ॥ ॐ अस्मन्मातामहप्रमातामहवृद्धप्रमातामहास्तृप्यंताम् ॥ ३ ॥ ॐआब्र-

ह्यस्तम्बपर्यंतं जगत्तृप्यताम् ॥ एवं स्नानांगतर्पणं कृत्वा यक्ष्मणे जलं दद्यात् ॥ ॐ यन्मया दूषितं तोयं मलैः शारीरसम्भवैः । तस्य पापस्य शुद्ध्यर्थं यक्ष्मैतत्ते तिलोदकम् ॥ १ ॥ ततस्तीरमागत्य । अग्निदग्धाश्च ये जीवा येऽप्यदग्धाः कुले मम । भूमौ दत्तेन तृप्यंतु तृप्ता यांतु परां गतिम् ॥ इति जलांजलिं तटे निःक्षिपेत् ॥ इति स्नानांगतर्पणं कृत्वा जलाद्बहिर्निष्क्रम्य अहतं श्वेतं धौतं वस्त्रं परिधाय उपवस्त्रं गृहीत्वानंतरं कुशासने प्रागास्यो वोदगास्य उपविशेत् ॥ इति नद्यादिषु स्नानप्रयोगः ॥

अथ गृहस्थानां गृहे नित्यस्नानम् ॥ गृहे उष्णोदकेन स्नानं न तु शीतोदकेन । तद्विधिश्च पात्रे शीतोदकं प्रक्षिप्य तदुपरि उष्णोदकेनापूर्य ॐ शन्नो देवीरभिष्टय आपो भवन्तु पीतये शंयोरभिस्रवन्तु नः ॥ १ ॥ आपः पुनंतु० ॥ २ ॥ द्रुपदादिव ॥३॥ ऋतं च सत्यं० ॥ ४ ॥ आपोहिष्ठा० ॥ ५ ॥ इति पंचभिर्ऋग्भिरभिमंत्र्य इमं मे वरुणेत्यादिना तीर्थानि

स्मरन् स्नायात ॥ गृहस्नाने संकल्पाचमनमघमर्षणं तर्पणं च न कार्यम् । एवं स्नात्वा वस्त्रेण पाणिना वा जलापनयनं कृत्वा शुष्कं शुभ्रमहतं कार्पासवस्त्रं परिधाय स्नानार्द्रवस्त्रमूर्ध्वमुत्तारयेत् ॥ ( विकच्छोनुत्तरीयश्च नग्नश्चावस्त्र एव च ॥ श्रौतस्मार्त्तें नैव कुर्यात् ) इति गृहे प्रातर्नित्यस्नानम् ॥

अथ तिलकधारणम् ॥ तत्रादौ वामहस्ते दक्षिणहस्तेन गंगादितीर्थमृत्तिकां वा गार्हपत्यौपासनाग्निभस्म गृहीत्वा पश्चादुदकमिश्रणानंतरं दक्षिणहस्तेन भस्म मर्दयेत् । तत्र मंत्राःॐअग्निरिति भस्म ॐवायुरिति भस्म ॐ जलमिति भस्म ॐ स्थलमिति भस्म ॐ व्योमेति भस्म सर्वꣳ ह वा इदं भस्म ॐ मन एतानि चक्षूंषि भस्मानीति भस्माभिमंत्र्य । ॐ त्र्यंबकं यजामहेसुगंधिंपुष्टिवर्धनम्॥उर्वारुकमिवबंधनान्मृत्योर्मुक्षीयमामृतात् ॥ ॐ त्र्यायुषं जमदग्नेरिति ललाटे । कश्यपस्य त्र्यायुषमिति ग्रीवायाम् । यद्देवेषु त्र्यायुषमिति दक्षिणांसे । तन्नो अस्तु त्र्यायुषमिति

हृदि । एतैर्मंत्रैर्ललाटादिषु धारयेत् । ततो रुद्राक्षधारणम् ॥

अथ संध्याप्रयोगः ॥ वामे बहून् कुशान् दक्षिणे पाणौ सपवित्रं कुशत्रयं च धृत्वा सप्रणवगायत्र्या शिखां बद्ध्वा ऐशान्यभिमुख आचम्य ऋतमित्यभिमंत्र्य पुनराचामेत् ॥ १ ॥ ॐ ऋतं च सत्यं चाभीद्धात्तपसोध्यजायत । ततो रात्र्यजायत ततः समुद्रो अर्णवः ॥ समुद्रादर्णवादधिसंवत्सरो अजायत । अहोरात्राणि विदधद्विश्वस्य मिषतो वशी ॥ सूर्याचंद्रमसौ धाता यथापूर्वमकल्पयत् । दिवं च पृथिवीं चांतरिक्षमथो स्वः ॥ ॐ अपवित्रः पवित्रो वेत्यस्य वामदेव ऋषिः ॥ विष्णुर्देवता गायत्री छंदः हृदि पवित्रकरणे विनियोगः ॥ ॐअपवित्रः पवित्रो वा सर्वावस्थां गतोपि वा । यः स्मरेत्पुंडरीकाक्षं स बाह्याभ्यन्तरः शुचिः ॥ इत्यात्मानं जलेन संप्रोक्ष्य । ॐ पृथ्वीत्यस्य मेरुपृष्ठ ऋषिः । कूर्मो देवता सुतलं छंदः । आसने विनियोगः ॥ ॐ

पृथिव त्वया धृता लोका देवि त्वं विष्णुना धृता।
त्वं च धारय मां देवि पवित्रं कुरु चासनम् ॥ इति
भूमिं प्रार्थयेत् ॥ अथ संकल्पः ॥ ॐ तत्सदद्य श्री-
मद्भगवतो महापुरुषस्य विष्णोराज्ञया प्रवर्त्तमा-
नस्य ब्रह्मणो द्वितीयपरार्द्धे तदादौ श्रीश्वेतवाराह-
कल्पे सप्तमे वैवस्वतमन्वन्तरे अष्टाविंशतितमे
कलियुगे कलिप्रथमचरणे जंबूद्वीपे भरतखण्डे
तत्रापि परमपवित्रे भारते वर्षे आर्यावर्त्तांतर्गत-
ब्रह्मावर्त्तैकदेशे कुमारिकानामक्षेत्रे श्रीगंगायमु-
नयोरमुकदिग्भागे नर्मदाया उत्तरे तटे श्रीबौ-
द्धावतारे अमुकनामसंवत्सरे अमुकायने अमु-
कऋतौ अमुकमासे अमुकपक्षे अमुकनक्षत्र
अमुकराशिस्थिते चंद्रे अमुकराशिस्थिते सूर्ये अ-
मुकदेवगुर्वादिशेषेषु ग्रहेषु यथास्थानस्थितेषु
एवं ग्रहगुणविशिष्टायां तिथौ अमुकगोत्रोऽमुक-
शर्माहं श्रुतिस्मृतिपुराणोक्तफलसिद्ध्यर्थं मम
उपात्तदुरितक्षयद्वारा श्रीपरमेश्वरप्रीत्यर्थं प्रातः-

संध्योपासनमहं करिष्य इति संकल्प्य वारिणात्मानं वेष्टयित्वा सप्रणवगायत्र्या रक्षां कुर्यात् ॥ ततः ॐकारस्य ब्रह्मा ऋषिर्गायत्री छंदोऽग्निर्देवता शुक्लो वर्णः सर्वकर्मारंभे विनियोगः ॥ ॐ सप्तव्याहृतीनां प्रजापतिः ऋषिर्गायत्र्युष्णिगनुष्टुब्बृहतीपंक्तित्रिष्टुब्जगत्यश्छंदांसि । अग्निवाय्वादित्यबृहस्पतिवरुणेंद्रविश्वेदेवा देवताः । अनादिष्टप्रायश्चित्ते प्राणायामे विनियोगः ॐ गायत्र्या विश्वामित्रऋषिर्गायत्रीछंदः सविता देवताऽग्निर्मुखमुपनयने प्राणायामे विनियोगः ॥ ॐ शिरसः प्रजापतिर्ऋषिर्ब्रह्माग्निवायुसूर्या देवताः यजुश्छन्दः प्राणायामे विनियोगः ॥ इति ऋष्यादिकं स्मृत्वा । बद्धासनः सम्मीलितनयनो मौनी प्राणायामत्रयं कुर्यात् ॥ तत्र वायोरादानकाले पूरकनामा प्राणायामस्तत्र श्यामं चतुर्भुजं विष्णुं नाभौ ध्यायेत् । धारणकाले कुंभकस्तत्र कमलासनं रक्तवर्णं ब्रह्माणं चतुर्मुखं हृदि ध्यायेत् । त्याग-

काले रेचकस्तत्र श्वेतं त्रिनेत्रं शिवं ललाटदेशे ध्यायेत्। त्रिष्वप्येतेषु प्रत्येकं त्रिमंत्राभ्यासः । प्रत्येकमोंकारादिसप्तव्याहृतयः ॥ ॐकारादिसावित्री ॐकारद्वयमध्यस्थं शिरश्चेति मंत्रस्तस्य स्वरूपं (ॐ भूः ॐ भुवः ॐस्वः ॐमहः ॐजनः ॐ तपः ॐसत्यं ॐतत्सवितुर्वरेण्यं भर्गोदेवस्य धीमहि धियो योनः प्रचोदयात् ॐ आपो ज्योती रसोमृतं ब्रह्म भूर्भुवः स्वरोम्) इति प्राणायामः ॥ तत ॐसूर्यश्चमेति ब्रह्मा ऋषिः प्रकृतिश्छंदः सूर्यो देवता अपामुपस्पर्शने विनियोगः ॥ ॐसूर्यश्च मामन्युश्च मन्युपतयश्च मन्युकृतेभ्यः पापेभ्यो रक्षंतां यद्रात्र्या पापमकार्षं मनसा वाचा हस्ताभ्यां पद्भ्यामुदरेण शिश्ना रात्रिस्तदवलुंपतु यत्किंचिद्दुरितं मयि इदमहमापोऽमृतयोनौ सूर्ये ज्योतिषि जुहोमि स्वाहा इति प्रातराचामेत् ॥ ( ॐ आपः पुनन्त्विति विष्णुर्ऋषिरनुष्टुप्छंद आपोदे-

वता अपामुपस्पर्शने विनियोगः ॥ ॐ आपः पुनन्तु पृथ्वी पृथ्वी पूता पुनातु मां पुनंतु ब्रह्मणस्पतिं ब्रह्मपूता पुनातु मां यदुच्छिष्टमभोज्यं च यद्वा दुश्चरितं मम सर्वं पुनातु मामापोऽसतां च प्रतिग्रहꣳ स्वाहा इति मध्याह्न आचामेत् ) ( ॐ अग्निश्च मेति रुद्र ऋषिः प्रकृतिश्छंदोग्निर्देवता अपामुपस्पर्शने विनियोगः ॥ ॐ अग्निश्च मामन्युश्च मन्युपतयश्च मन्युकृतेभ्यः पापेभ्यो रक्षंतां यदह्ना पापमकार्षं मनसा वाचा हस्ताभ्यां पद्भ्यामुदरेण शिश्ना अहस्तदवलुंपतु यत्किंचिद्दुरितं मयि इदमहमापोऽमृतयोनौ सत्ये ज्योतिषि जुहोमि स्वाहा इति सायमाचामेत् ) ( तत आपोहिष्ठेत्यादि त्र्यृचस्य सप्तभिः पदैः शिरसि अष्टमेन भूमौ नवमेनापि शिरसि कुशत्रयेण जलं क्षिपेत् ) ॐ आपोहिष्ठेत्यादित्र्यृचस्य सिंधुद्वीप ऋषिर्गायत्री छंदः आपो देवता मार्ज्जने विनियोगः ॥ ॐ आपोहिष्ठामयोभुवः ॐ तानऽऊर्जेदधातन

ॐ महेरणायचक्षसे ॐ योवः शिवतमोरसः ॐ तस्यं भाजयतेहनः ॐउशतीरिवमातरः ॐ तस्माऽअरंङ्गमामवः ॐ यस्यक्षयाय जिन्वथ ॐआपोजनयथाचन ॥ इति मार्ज्जनम् ॥ ततः ( करेण जलमादाय वारत्रयं द्रुपदां पठित्वा तज्जलं शिरसि क्षिपेत् ) ॐद्रुपदादिवेति कोकिलो राजपुत्र ऋषिः आपो देवता अनुष्टुप्छंदः । अघमर्षणे विनियोगः ॥ ॐद्रुपदादिवमुमुचानः स्विन्नःस्नातोमलादिव पूतंपवित्रेणेवाज्यमापः शुधंतुमैनंस ( ततः करस्थजलं नासायां संयोज्य आयतासुरनायतासुर्वा त्रिः सकृद्वाऽघमर्षणं जपेत् ) ॐऋतं च सत्यं चेति अघमर्षणसूक्तस्याघमर्षण ऋषिरनुष्टुप्छंदो भाववृत्तो देवता अश्वमेधाव-भृथे विनियोगः ॥ ॐ ऋतं च सत्यं चाभीद्धात्तपसोध्यजायत । ततो रात्र्यऽजायत ततः समुद्रो अर्णवः ॥ समुद्रादर्णवादधि संवत्सरो अजायत । अहो

रात्राणि विदधद्विश्वस्य मिषतो वशी ॥ सूर्याचंद्रमसौ धाता यथापूर्वमकल्पयत् । दिवं च पृथिवीं चांतरिक्षमथो स्वः ॥ ततः ॐ अंतश्चरसीति तिरश्चीन ऋषिरनुष्टुप्छंदः आपो देवता आचमने विनियोगः ॥ ॐ अंतश्चरसि भूतेषु गुहायां विश्वतोमुखः । त्वं यज्ञस्त्वं वषट्कार आपोज्योती रसोमृतमित्यनेनाचामेत् ॥ तत अर्घ्यदानम् ॥ उत्थाय ॐभूर्भुवः स्वरिति गायत्र्या पुष्पमिश्रं जलं सूर्याभिमुखं वारत्रयं प्रक्षिपेत् ॥ ( कालातिक्रमे सति ॐआकृष्णेन इति मंत्रेण चतुर्थार्घ्यं दद्यात् ) ॐभूर्भुवःस्वरिति महाव्याहृतीनां परमेष्ठी प्रजापतिर्ऋषिः । अग्निवायुसूर्या देवताः । गायत्र्युष्णिगनुष्टुभश्छन्दांसि । ॐतत्सवितुरित्यस्य विश्वामित्र ऋषिः । सविता देवता । गायत्री छंदः । अर्घ्यदाने विनियोगः ॥ ॐभूर्भुवःस्वः ॐतत्सवितु० ब्रह्मस्वरूपिणे सूर्यनारायणाय नमः । इदमर्घ्यं दत्तं न मम असौ आदित्यो ब्रह्म । इत्यर्घ्यं दत्त्वा ( प्रातः सायं च कृताञ्जलिर्मध्याह्ने ऊर्ध्वबाहुः सूर्यं ध्याय-

न्नुपतिष्ठेत् ( एभिर्मंत्रैः ) ॐउद्वयंतमित्यस्य हिरण्यस्तूप ऋषिरनुष्टुप्छंदः। सूर्यो देवता। सूर्योपस्थाने विनियोगः॥ ॐउद्वयंतमंसस्पारिस्वःपश्यंत॥ उत्तरं देवं देवत्रासूर्यमगंन्मज्योतिरुत्तमम्॥ ॥ १ ॥ ॐउदुत्यमित्यस्य प्रस्कण्व ऋषिर्गायत्री छंदः। सूर्यो देवता। सूर्योपस्थाने विनियोगः॥ ॐउदुत्यंजातवेदसंदेववंहंतिकेतवः॥दृशेविश्वायसूर्यम ॥ २ ॥ ॐ चित्रमित्यस्य कौत्स ऋषिस्त्रिष्टुप्छंदः सूर्यो देवता सूर्योपस्थाने विनियोगः॥ ॐ चित्रंदेवानामुदगादनीकंचक्षुर्मित्रस्यव्वरुणस्याग्नेः॥आप्रा द्यावापृथिवीऽअंतरिक्षंसूर्यऽआत्माजगतस्तस्थुषश्च ॥ ३ ॥ ॐतच्चक्षुरिति दध्यङ्ङाथर्वण ऋषिरक्षरातीतिपुर उष्णिक्छंदः सूर्यो देवता सूर्योपस्थाने विनियोगः ॥ ॐ तच्चक्षुर्देवहितं पुरस्ताच्छुक्रमुच्चरत्। पश्येमशरदः शतंजीवेम

शरदः शतꣳशृणुयामशरदः शतंप्रब्रवामशरदः शतमदीनाःस्यामशरदः शतं भूयश्चशरदः शतात् ॥ इत्युपस्थायोपविश्य ॥ ततः ॐ हृदयाय नमः । ॐ भूः शिरसे स्वाहा । ॐ भुवः शिखायै वषट् । ॐ स्वः कवचाय हुं । ॐ भूर्भुवः स्वर्नेत्राभ्यां वौषट् । ॐ भूर्भुवः स्वः अस्त्राय फट् ॥ इत्यंगानि त्रिरावर्त्य ॥ ॐ तत्पदं पातु मे पादौ जंघे मे सवितुः पदम् ॥ वरेण्यं कटिदेशं तु नाभिं भर्गस्तथैव च ॥ १ ॥ देवस्य मे तु हृदयं धीमहीति गलं तथा ॥ धियो मे पातु जिह्वायां यः पदं पातु लोचने ॥ २ ॥ ललाटे नःपदं पातु मूर्द्धानं मे प्रचोदयात् ॥ इति गायत्रीन्यासं च कुर्यात् ॥ तत ॐकारस्य ब्रह्मा ऋषिर्गायत्री छंदोऽग्निर्देवता जपे विनियोगः । ॐ त्रिव्याहृतीनां प्रजापतिर्ऋषिर्गायत्र्युष्णिगनुष्टुप्छंदांस्यग्निवाय्वादित्या देवताः जपे विनियोगः ॥ ॐ गायत्र्या विश्वामित्र ऋषिः गायत्री छंदः सविता देवता जपे विनियोगः ॥ इति ऋष्या-

दिकं स्मृत्वा ॥ ॐ मुक्ताविद्रुमहेमनील-
धवलच्छायैर्मुखैस्त्रीक्षणैर्युक्तामिंदुनिबद्धरत्नमुकुटां त-
त्त्वार्थवर्णात्मिकाम् ॥ गायत्रीं वरदाभयाङ्कुशा-
कशां शूलं कपालं गुणं शंखं चक्रमथारविंदयुग-
लं हस्तैर्वहन्तीं भजे ॥ १ ॥ गायत्रीं ध्यायेत् ॥
तत ॐ तेजोसीति देवा ऋषयः शुक्रं देवतं
गायत्री छंदो गायत्र्यावाहने विनियोगः ॥
ॐतेजोसिशुक्रमस्यमृतमसिधामनामासिप्रियंदेवाना-
मनाधृष्टंदेवयजनमसि ॥ इति गायत्रीमावाह्य
ॐतुरीयस्य विमल ऋषिः परमात्मा देवता गा-
यत्री छंदः गायत्र्युपस्थाने विनियोगः ॥ ॐगा
यत्र्यस्येकपदी द्विपदी त्रिपदी चतुष्पद्यपदसि न
हि पद्यसे नमस्ते तुरीयाय दर्शताय पदाय परोर-
जसे सावदोम् ॥ इत्युपस्थाय प्रातः प्राङ्मुखो
मध्याह्ने सूर्याभिमुखस्तिष्ठन् सायं पश्चिमाभिमु-
ख उपविष्ट उक्तविधिना सहस्रं शतं वा गायत्रीं
जपेत् ॥ जप्यस्वरूपं यथा ॐभूर्भुवःस्वः तत्सवि

तुर्वरेण्यं भर्गो देवस्य धीमहि धियो यो नः प्रचोदयात् ॐ जपांते कवचं पठित्वा देवागातविति पठेत् । ततः प्रणिपत्य विसर्जयेत् ॥ इति संध्याप्रयोगः ॥

अथ ब्रह्मयज्ञः ॥ तत्र कात्यायनः देशकालौ संकीर्त्य श्रीपरमेश्वरप्रीत्यर्थं ब्रह्मयज्ञेनाहं यक्ष्ये इति संकल्प्य कुशासने प्राङ्मुखोपविष्टः ब्रह्मयज्ञं कुर्यात् तद्यथा । ॐ विभ्राड्बृहत्पिबतुसोम्यम्मध्वायुर्दधद्यज्ञपतावविह्रुतम् ॥ वातजूतोयोऽअभिरक्षतित्मनाप्रजाः पुपोष पुरुधाविराजति ॥ १ ॥ उदुत्यञ्जातवेदसन्देवम्वहन्तिकेतवः दृशेविश्वायसूर्य्यम् ॥ २ ॥ येनापावकचक्षसाभुरण्यन्तञ्जनाँ२॥ ऽअनु ॥ त्वम्वरुणपश्यसि ॥ ३ ॥ दैव्यावध्वर्यूऽआगतꣳ रथेनसूर्य्यत्वचा मद्ध्वायज्ञꣳ समञ्जाथेतम्प्रत्नथायम्वेनश्चित्रन्देवानाम् ॥ ॥ ४ ॥ तम्प्रत्नथापूर्वथाविश्वथेमथाज्ज्येष्ठताति

म्बर्हिषदं ॐस्ववि॑दं प्रतीचीनंवृजनं दोहसेधुनि-
माशुंजयंन्तमनुयासुवर्धसे ॥ ५ ॥ अयम्वेन-
श्चोदयत्पृश्निगर्भाज्ज्योतिर्जरायूरजसो विमानेइमम्
पाॐसंङ्गमे सूर्य्यस्यशिशुन्नविप्रामतिभीरिहन्ति ॥
६ ॥ चित्रन्देवानामुदगादनीकंचक्षुर्म्मित्रस्यव्वरुण-
स्याग्नेः आप्राद्यावापृथिवीऽअन्तरिक्षॐ सूर्यऽआत्मा
जगतस्तस्थुषश्च ॥ ७ ॥ आनऽइडाभिर्व्विदथेसुश
स्तिव्विश्वानरः सवितादेवऽएतु अपियथायुवानोमत्स
थानोव्विश्वजगदभिपित्वेमनीषा ॥ ८ ॥ यद्द्यकच्चवृ
त्रहन्नुदगाऽअभिसूर्य्यसर्व्वन्तदिन्द्रतेवशे ॥ ९ ॥ तर
णिर्व्विश्वदर्शतोज्योतिष्कृदसिसूर्य व्विश्वमाभासिरोचन-
म् ॥ १० ॥ तत्सूर्यस्यदेवत्वन्तन्महित्वम्मध्याकर्त्तो-
र्व्वितंतॐसञ्जभार यदेदयुक्तहरितः सधस्थादाद्रात्रीव्वा

संस्तनुतेसिमस्मै ॥ ११ ॥ तन्मित्रस्यव्वरुणस्याभिचक्षे सुर्य्योरूपंकृणुतेद्योरुपस्थे अनन्तमन्यद्रुशदस्यपाजः कृष्णमन्यद्धरितःसम्भरन्ति ॥ १२ ॥ बण्महाँ२असिसूर्य्य बडादित्यमहाँ२ असि महस्तेसतो महिमापनस्यतेद्धादेवमहाँ२ असि ॥ १३ ॥ बट्सूर्यश्रवसामहाँ२ असि सत्रादेवमहाँ२ असिमह्नादेवानामसुर्य्यःपुरोहितो व्विभुज्योतिरदाभ्यम् ॥ १४ ॥ श्रायन्तऽइव सूर्य्यंव्विश्वेदिन्द्रस्य भक्षत ॥ वसूनि जातेजनमानऽ ओजसाप्रतिभागन्नदीधिम ॥ १५ ॥ अद्या देवाऽ उदितासूर्य्यस्यनिरंहसः पिपृता निरवद्यात् तन्नोमित्रोव्वरुणोमा महन्तामदितिः सिन्धुःपृथिवीऽउतद्यौः ॥ १६ ॥ आकृष्णेनरजसावर्त्तमानोनिवेशयन्नमृतम्मर्त्यञ्च ॥ हिरण्ययेनसविता रथेनादेवोयातिभुवनानिपश्यन् ॥ १७ ॥ अथ

पुरुषसूक्तम् ॥ सहस्रशीर्षापुरुषः सहस्राक्षः सह-
स्रपात् ॥ सभूमिꣳ सर्वतस्पृत्वात्यतिष्ठद्दशाङ्गु-
लम् ॥ १ ॥ पुरुषऽएवेदꣳ सर्व्वंयद्भूतंयच्चभाव्यम
उतामृतत्त्वस्येशानोयदन्नेनातिरोहति ॥ २ ॥
एतावानस्यमहिमातोज्यायाँश्चपूरुषः ॥ पादोस्य
व्विश्वाभूतानि त्रिपादस्यामृतन्दिवि ॥ ३ ॥ त्रिपा-
दूर्ध्व उदैत्पुरुषः पादोस्येहाभवत्पुनः ततोव्विष्वं
ङ्व्यक्रामत्साशनानशनेऽअभि ॥ ४ ॥ ततोव्विरा
ड्जायतव्विराजोऽअधिपूरुषः ॥ सजातोऽअत्यं
रिच्यतपश्चाद्भूमिमथोपुरः ॥ ५ ॥ तस्माद्यज्ञा
त्सर्वहुतः सम्भृतं पृषदाज्यम् ॥ पशूँस्ताँश्चक्रेवाय
व्यानारण्याग्राम्याश्चये ॥ ६ ॥ तस्माद्यज्ञात्स-
र्वहुतऽऋचस्सामानि जज्ञिरे ॥ छन्दाꣳसि ज-
ज्ञिरेतस्माद्यजुस्तस्मादजायत ॥ ७ ॥ तस्मा

दश्वाऽअजायन्तयेकेचोभयादतः ॥ गावोहजज्ञिरे तस्मात्तस्माज्जाताअजावयः ॥ ८ ॥ तंयज्ञं बर्हिषिप्रौक्षन्पुरुषंजातमग्रतः ॥ तेनदेवाऽ अयजन्तसाध्याऽऋषयश्चये ॥ ९ ॥ यत्पुरुषंव्यदधुः कतिधाव्यकल्पयन् ॥ मुखंकिमस्यासीत् किम्बाहू किमूरूपादाऽउच्यते ॥ १० ॥ ब्राह्मणोस्यमुखमासीद्बाहूराजन्यः कृतः ॥ ऊरू तदस्ययद्वैश्यः पद्भ्यांशूद्रोअजायत ॥ ११ ॥ चन्द्रमामनसोजातश्चक्षोः सूर्योऽअजायत॥श्रोत्राद्वायुश्चप्राणश्चमुखादग्निरजायत ॥ १२ ॥ नाभ्याऽआसीदन्तरिक्षꣳ शीर्ष्णोद्यौः समवर्त्तत ॥ पद्भ्यांभूमिर्दिशः श्रोत्रात्तथालोकाँ२ अकल्पयन् ॥ १३ ॥ यत्पुरुषेणहविषादेवायज्ञमतन्वत वसन्तोस्यासीदाज्यं ग्रीष्मऽइध्मः शरद्धविः ॥ १४ ॥ सप्तास्या

सप्तास्यासन्परिधयस्त्रिः सप्तसमिधः कृताः । देवा यद्यज्ञन्तन्वाना अबध्नन्पुरुषम्पशुम् ॥ १५ ॥ यज्ञेन यज्ञमयजन्तदेवास्तानि धर्माणि प्रथमान्यासन् ॥ तेहनाकम्महिमानः सचंत यत्र पूर्वे साध्याः सन्ति देवाः ॥ १६ ॥ अथ शिवसंकल्पः ॥ ॐ यज्जाग्रतो दूरमुदैति दैवं तदु सुप्तस्य तथैवैति ॥ दूरङ्गमञ्ज्योतिषां ज्योतिरेकन्तन्मे मनः शिवसंकल्पमस्तु ॥ १ ॥ येन कर्माण्यपसो मनीषिणो यज्ञे कृण्वन्ति विदथेषु धीराः ॥ यदपूर्वं यक्षमन्तः प्रजानान्तन्मे मनः शिवसंकल्पमस्तु ॥ २ ॥ यत्प्रज्ञानमुत चेतो धृतिश्च यज्ज्योतिरन्तरमृतम्प्रजासु यस्मान्न ऋते किञ्चन कर्म्म क्रियते तन्मे मनः शिवसंकल्पमस्तु ॥ ३ ॥ येनेदम्भूतम्भुवनं भविष्यत्परिगृहीतममृतेन सर्वम् ॥ येन यज्ञस्तायते सप्तहोता तन्मे मनः शिवसंकल्पमस्तु ॥ ४ ॥ यस्मिन्नृचः

सामयजूᳪंषियस्मिन्प्रतिष्ठितारथनाभाविवाराः ॥ यस्मिंश्चित्तᳬं सर्व्वमोतंप्रजानान्तन्मेमनः शिवसं कल्पमस्तु ॥ ५ ॥ सुषारथिरश्वानिवयन्मनुष्या न्नेनीयतेभीशुभिर्व्वाजिनइवहृत्प्रतिष्ठंयदजिरञ्जविष्ठ न्तन्मेमनः शिवसकल्पमस्तु ॥ ६ ॥ अथ मण्ड लब्राह्मणम् ॥ ॐयदेतन्मंडलं तपतितन्महदुक्थ न्ताऋचः सऋचांलोकोथयदेतदर्चिर्दीप्यते तन्म हाव्रतं तानिसामानिससाम्नां लोकोथयऽएषऽए तस्मिन्मंडलेपुरुषः सोग्निस्तानियजूᳪंषिसयजुषां लोकः ॥ १ ॥ सैषात्रय्येवविद्यातपतितद्धैतदप्यविद्वा ᳪंसऽऽआहुस्त्रयीवाऽऽएषा विद्यातपतीतिव्वाग्घैवत त्पश्यन्तीव्वदति ॥ २ ॥ सएषएवमृत्युः सऽएषएव मृत्युर्यएष एतस्मिन्मण्डलेपुरुषोथैतदमृतंयदेतदर्चिर्दी

प्यते तस्मान्मृत्युर्न म्रियतेमृतेह्यन्तस्तस्मादुनदृश्यतेमृ
तेह्यन्तः ॥ ३ ॥ तदेषश्लोकोभवति तदेषश्लोकोभ
वत्यंतरंमृत्योरमृतमित्यवरꣳ ह्येतन्मृत्योरमृतंमृत्या
वमृतमाहितमित्येतस्मिन्हि पुरुषएतन्मण्डलं प्रति
ष्ठितं तपतिमृत्युर्व्विवस्वन्तं वस्तऽइत्यसौवाऽआदि
त्यो व्विवस्वानेषह्यहोरात्रेव्विवस्तेतमेषवस्तेसर्वतो ह्यने
नपरिवृतोमृत्योरात्माव्विवस्वतीत्येतस्मिन्हिमण्डल
ऽएतस्य पुरुषस्यात्मैतदेष श्लोको भवति ॥ ४ ॥
तयोर्वाएतयोरुभयोरेतस्यचार्चिषऽएतस्यच पुरुषस्यै-
तन्मण्डलं प्रतिष्ठातस्मान्महदुक्थम्परस्मैनशꣳ सेन्ने-
देतांप्रतिष्ठांछिनदाऽइत्येताꣳहसप्रतिष्ठांछितेषोमहदु
क्थंपरस्मैशꣳ सतितस्मादुक्थशासंभूयिष्ठंपरिचक्षते
प्रतिष्ठाछिन्नोहिभवतीत्यधिदैवतम् ॥ ५ ॥ अथाधिय-

ज्ञम् । यदेतन्मंडलंतपत्ययरुठं सरुक्मोथयदेतदर्चिर्दी-
प्यतऽइदन्तत्पुष्करपर्णमापोह्येता आपःपुष्करपर्णमथ-
यएषएतस्मिन्मण्डले पुरुषोयमेवसयोय७ंहिरण्मयः
पुरुषस्तदेतदेवैतत्त्रय७ंसंस्कृत्येहोपधत्ते तद्यज्ञस्यैवा-
नुस७ंस्थामूर्द्धमुत्क्रामतितदेतमप्येतियएषतपति त-
स्मादग्निन्नाद्रियेतपरिहन्तुममुत्रह्येष तदाभवतीत्यु एवा-
धियज्ञम॥६॥अथाध्यात्मम् । यदेतन्मंडलंतपतियश्चै-
षरुक्मइदंतच्छुक्लमक्षंनथयदेतदर्चिर्दीप्यते यच्चैतत्पुष्क
रपर्णमिदंतत्कृष्णमक्षन्नयएषएतस्मिन्मण्डलेपुरुषो-
यश्चैषहिरण्मयः पुरुषोयमेवसयोयंदक्षिणेक्षन्पुरुषः
॥७॥सएषएवलोकंपृणतामेषसर्व्वोग्निरभिसम्पद्यतेतस्यै
तन्मिथुनंयोय७ं सव्येक्षन्पुरुषोर्द्धमुहैतदात्मनोयन्मि
थुनंयदावैसहमिथुनेनाथ सर्वोथकृत्स्नःकृत्स्नतायैतद्यत्ते

द्वेभवतोद्वन्द्वᳪंहिमिथुनंप्रजननन्तस्माद्द्वेद्वेलोकंपृणेउ पधीयेतेतस्मादुद्वाभ्यांद्वाभ्यांचितिंप्रणयन्ति॥८॥सएु षएवेन्द्रोयोयंदक्षिणेक्षन्पुरुषोथेयमिन्द्राणीताभ्यांदेवा एतांविधृतिमकुर्वन्नासिकां तस्माज्जायायाअन्तेनाश्नी याद्वीर्यवान् हास्माज्जायतेव्वीर्यवन्तमुहसाजनयतिय स्याअन्तेनाश्नाति ॥ ९ ॥ तदेतद्देवव्रतᳪंराजन्यब न्धवोमनुष्याणां मनुतमांगोपायन्ति तस्मादुतेषुवीर्य- वान्जायते मृतवाकाव्वयसाᳪं साक्षिप्रश्येनंजनयति ॥ १० ॥ तौहृदययस्याकाशं प्रत्यवेत्यमिथुनीभव- तस्तौ यदामिथुनस्यान्तंगच्छतोथहैतत्पुरुषः स्व- पितितद्यथा हैवेदंमानुषस्यमिथुनस्यान्त्तगत्वासम्वि तइवभवत्येवᳫं हैवैतदसंविदइवभवतिदैवᳪं ह्येतन्मि- थुनंपरमोह्येषआनन्दः ॥ ११ ॥ तस्मादेवंव्वित् स्वप्याल्लोक्यᳫं हैतेएवतद्देवते मिथुनेनप्रियेणधाम्नास

मर्द्धयति तस्मादुहस्वपंतंधुरेवनबोधयेन्नेदेतेदेवतेमिथु-
नीभवन्त्यौ हिनसानीतितस्मादुहैततत्सुषुपुषः श्लेष्म-
णमिवमुखंभवत्येतेएवतद्देवतेरेतः सिञ्चतस्तस्माद्रेतसइ
दर्ठ॑सर्वर्ठ॑संभवतियदिदंकिञ्च ॥ १२ ॥ सएषएवमृ-
त्युर्यएषएतस्मिन्मण्डलेपुरुषोयश्चायंदक्षिणेक्षन्पुरुष-
स्तस्यहैतस्यहृदयेपादावतिहतौतौहैतदाच्छिद्योत्क्राम-
ति सयदोत्क्रामत्यथहैतत्पुरुषोम्रियते तस्मादुहैतत्प्रे-
तमाहुराच्छेद्यस्येति ॥ १३ ॥ एषउएवप्राणः एष
हीमाः सर्वाः प्रजाः प्रणयतितस्यैतेप्राणाः स्वाः
सयदास्वपित्यथैनमेते प्राणाःस्वा अपियन्ति तत्स्वा
प्यय ःस्वाप्ययो हवैत ७ स्वप्न इत्याचक्षते परो
क्षंपरोक्षकामाहि देवाः ॥ १४ ॥ सऽएतैः सेऽएतैः
सुतोनकस्यचनव्वेदनमनसा संकल्पयति नव्वा

चान्नस्यरसंविजानातिनप्राणेनगंधं विजानाति नचक्षु-
षापश्यतिन श्रोत्रेणशृणोत्येतध्ह्येतेतदा पीताभवन्ति-
सएषएकःसन्प्रजासुबहुधाव्यावि ष्टस्तस्मादेकासती-
लोकंपृणा सर्वमग्निमनुविभव त्यथयदेकएवतस्मादेकः
॥ १५ ॥ तदाहुरेकोमृत्यु र्बहवइत्येकश्चबहवश्चेति
ब्रूयाद्यदहासावमुत्रते नैकोथयदिहप्रजासुबहुधाव्या
विष्टस्तेनोबहवः ॥ १६ ॥ तदाहुरन्तिकेमृत्युर्दूराइत्य
न्तिकेचदूरेचे तिहब्रूयाद्यदहायमिहाध्यात्मन्तेनान्ति-
केथ यदसावमुत्र तेनोदूरे ॥ १७ ॥ तदेषश्लोकोभवति
तदेषश्लोकोभवत्यन्नेभात्यपश्रितोरसाना ध्संक्षरेमृत
इति यदेतन्मण्डलंतपतितदन्नमथय एषएतस्मिन्मण्ड-
लेपुरुषः सोत्तासएतस्मिन्नन्ने पश्रितोभातीत्यधिदै-
वतं ॥ १८ ॥ अथाध्यात्मं । अथाध्यात्ममिदमेवश-
रीरमन्नमथयोयंदक्षिणे क्षन्पुरुषः सोता स एतस्मिन्न-

न्नेपश्रितोभाति ॥ १९ ॥ तमेतमग्निरित्यध्वर्यव उपासते यजुरित्येषहीदꣳ सर्वंयुनक्तिसामेतिच्छन्दोगाए तस्मिन्हीदꣳ सर्वꣳ समानमुक्थमितिबह्वृचाएषहीदꣳ सर्वमुत्थापयतियातुरितियातुविदएतेनहीदꣳ सर्वंयतंविषमितिसर्पाःसर्प इति सर्पविदऊर्गितिदेवारयिरितिमनुष्या मायेत्यसुराःस्वधेतिपितरोदेवजन इति देवजनविदोरूपमितिगंधर्वागन्धइत्यप्सरसस्तंयथायथोपासते तदेवभवति तद्धैना न्भूत्वावति तस्मादेनमेवंवित्सर्वैरेवैतैरुपासीतसर्वꣳ हैतद्भवतिसर्वꣳ हैनमेतद्भूत्वावति ॥ २० ॥ सएषत्रीष्टकोग्निरऋगेकायजुरेकासामैकातद्यां काञ्चात्रर्चोपदधाति रुक्म एवतस्या आयतनमथयां यजुषापुरुषऽएवतस्याआयतनमथयाꣳसाम्नापुष्करपर्णमेव तस्या आयुतन्मेवंत्रीष्टकः ॥२१॥तेवाएतेउभेएषचरुक्मएतच्चपुष्करपर्णमेतं

पुरुषमपीत ऋभेद्यृक्सामे यजुरपीतएवम्वेकेष्टकः ॥ २२ ॥ सएषएवमृत्युः सएषएवमृत्युर्यएषए स्मिन्मंडलेपूरुषोयश्चायंदक्षिणेक्षन्पुरुषः सएषएवं विदआत्माभवतिसयदैवम्विदस्माँल्लोकात्प्रेत्यथैतमेवा त्मानमभिसम्भवतिसोमृतोभवतिमृत्युर्ह्यस्यात्माभुव- ति ॥ २३ ॥ इति मंडलब्राह्मणम् ॥ इत्युपस्थाय प्रदक्षिणीकृत्य नमस्कृत्य प्रागग्रदर्भेषु उपविशेत् ॥ ततो दर्भपाणिः स्वाध्यायं च यथाशक्ति इषेत्वो र्जेत्वेत्यादि पठेत् ॥ तत्र तावन्न्यासः ॥ ॐ गौतमभर द्वाजाभ्यां नमः नेत्रयोः ॥ ॐ विश्वामित्रजमदग्निभ्यां नमः श्रोत्रयोः ॥ ॐ वसिष्ठकश्यपाभ्यां नमः नासि कायाम् ॥ ॐअत्रये नमः वाचि ॥ ॐगायत्र्यग्नि भ्यां नमः शिरसि ॥ ॐउष्णिक्सवितृभ्यां नम ग्रीवायाम् ॥ ॐबृहतीबृहस्पतिभ्यांनमः हनौ ॥ ॐ बृहद्रथंतरद्यावापृथिवीभ्यां नमः बाह्वोः ॥

ॐत्रिष्टुबिन्द्राभ्यां नमः नाभौ ॥ ॐजगत्यादित्याभ्यां नमः श्रोण्योः ॥ ॐअतिच्छंदःप्रजापतिभ्यां नमः लिङ्गे ॥ ॐयज्ञायज्ञियवैश्वानराभ्यां नमः गुदे ॥ ॐअनुष्टुब्विश्वेभ्यो देवेभ्यो नमः ऊर्वोः ॥ ॐपंक्तिमरुद्भ्यो नमः जान्वोः ॥ ॐद्विपदाविष्णुभ्यां नमः पादयोः ॥ ॐविच्छंदोवायुभ्यां नमः नासापुटस्थप्राणेषु ॥ ॐ न्यूनाक्षराछंदोभ्यो नमः सर्वाङ्गेषु ॥ एवमेवाङ्गानि योजयित्वा वेदमयः संपद्यते। न कुतश्चिद्भयं विंदते। शापानुग्रहसामर्थ्यं ब्राह्मं तेजश्च वर्द्धते । स्वर्गलोकः परं साधनं धर्मार्थकाममोक्षस्य च तस्य दारिद्र्यदुःखशोकरोगभयं न भवति । ततः ॐभूर्भुवः स्वःॐ तत्सवितु० ॐ इषेत्वोर्जेत्वांव्वायवस्त्थदेवोवः सविताप्प्रार्प्पयतुश्रेष्ठतमायकर्म्मणऽआप्यायद्ध्मघ्न्याऽइंद्रायभागम्प्रजावतीरनमीवाऽअयक्ष्मामावस्तेनऽईशतमाघशंसो ध्रुवाऽअस्मिन्गोपतौस्यातबह्वीर्य्यजमा

नस्यपशूत्पाहि ॥ २ ॥ ॐअग्निमीळेपुरोहितंयज्ञस्य देवमृत्विजम् होतारंरत्नधातमम् ॥ ३ ॥ ॐ अग्न आयाहिवीतयेगृणानोहव्यदातयेनिहोतासत्सिबर्हिषि ४ ॥ ॐ शन्नोदेवी रभिष्टयऽआपो भवंतुपीतये । शंयोरभिस्रवंतुनः ॥ ५ ॥ इति चतुर्वेदमंत्रान्पठित्वा । सहस्रं शतं वा गायत्रीं जपेत् ( अत्र योगियाज्ञवल्क्यः —वेदाथर्वपुराणानि सेतिहासानि शक्तितः ॥ जपयज्ञार्थसिध्यर्थं विद्यां चाध्यात्मिकीं जपेत् ॥ ) ततः ॐयस्य स्मृत्या० अनेन ब्रह्मयज्ञाख्येन कर्मणा श्रीभगवान् परमेश्वरः प्रीयतां न मम ॥ ॐतत्सद्ब्रह्मार्पणमस्तु ॥ इति ब्रह्मयज्ञप्रयोगः ॥ एवं ब्रह्मयज्ञं विधाय तर्पणं कुर्यात् ॥

अथ तर्पणप्रयोगः । तत्रादौ आचम्य देशकालौसंकीर्त्य देवर्षिपितृतर्पणं करिष्ये इति संकल्प्य सव्येन प्राङ्मुख उदङ्मुखो वा देवान्ध्यात्वा

सव्यकरान्वारब्धसकुशदक्षिणकरेण तोयं गृहीत्वाऽक्षतांश्च देवतीर्थेन ॐकारपूर्वं ब्रह्मादिदेवांस्तर्पयेत् । तत्र प्रयोगः ॥ ॐ ब्रह्मा तृप्यताम् १ ॥ ॐ विष्णुस्तृप्यताम् १ ॥ ॐ रुद्रस्तृ० १ ॥ ॐ प्रजापतिस्तृ० १ ॥ ॐ देवास्तृ० १ ॥ ॐ छंदांसि तृ० १ ॥ ॐ वेदास्तृ० १ ॥ ॐ ऋषयस्तृ० १ ॥ ॐ पुराणाचार्यास्तृ० १ ॥ ॐ गंधर्वास्तृ० १ ॥ ॐ इतराचार्यास्तृ० १ ॥ ॐ संवत्सरः सावयवस्तृ० १ ॥ ॐ देव्यस्तृ० १ ॥ अप्सरसस्तृ० १ ॥ ॐ देवानुगास्तृ० १ ॥ ॐ नागास्तृ० १ ॥ ॐ सागरास्तृ० १ ॥ पर्वतास्तृ० १ ॥ ॐ सरितस्तृ० १॥ ॐ मनुष्यास्तृ० १ ॥ ॐ यक्षास्तृ० ॥ १ ॐ रक्षांसि तृ० १ ॥ ॐ पिशाचास्तृ० १ ॥ ॐ सुपर्णास्तृ० १ ॥ भूतानि तृ० १ ॥ ॐ पशवस्तृ० १ ॥ ॐ वनस्पतयस्तृ० १ ॥ ॐ ओषधयस्तृ० १ ॥ ॐ भूतग्रामश्चतुर्विधस्तृ० १ ॥ एवमेव ॐ मरीचिस्तृ० १ ॥ ॐ अत्रिस्तृ० १ ॥ ॐ अंगिरास्तृ० १ ॥ ॐ पुलस्त्यस्तृ० १ ॥ पुलहस्तृ० १ ॥

ॐ क्रतुस्तृ० १ ॥ ॐ प्रचेतास्तृ० १ ॥ ॐ वसिष्ठ-स्तृ० १ ॥ ॐ भृगुस्तृ० १ ॥ ॐ नारदस्तृ० १ ॥ ततो निवीती उदङ्मुख उत्तराग्रेण कुशेन प्रजापति-तीर्थेन यवोदकेन च सनकादीन् प्रत्येकं द्विवारम्॥ ॐ सनकस्तृप्यताम् २॥ ॐ सनंदनस्तृ० २ ॥ ॐ सना-तनस्तृ० २ ॥ ॐ कपिलस्तृ० २ ॥ ॐ आसुरिस्तृ० २ ॥ ॐ वोढुस्तृ० २ ॥ ॐ पंचशिखस्तृ० २॥ त-तोऽपसव्यं दक्षिणामुखः पितृतीर्थेन मोटकरूपकुशत्र-येण सतिलचंदनोदकेन कव्यवाडादीन् प्रत्येकं त्रिः ॥ ॐ कव्यवाडस्तृप्यतामिदं तिलोदकं तस्मै स्वधा नमः ३॥ ॐ नलस्तृप्यतामिदं तिलोदकं तस्मै स्वधा नमः ३ ॥ ॐ सोमस्तृप्यतामिदं तिलो० ३॥यमस्तृ-प्यतामिदं० ३॥ ॐअर्यमातृप्यतामिदं० ३॥ ॐअग्नि-ष्वात्तास्तृप्यन्तामिदं तिलोदकं तेभ्यः स्वधा नमः३॥ ॐ सोमपास्तृप्यंतामिदं तिलोदकं तेभ्यः स्वधा नमः ३॥ॐ बर्हिषदस्तृप्यंतामिदं तिलोदकं तेभ्यः स्वधा नमः३॥ ततः ॐ यमाय नमः३॥ॐ धर्मराजाय न०

३ ॥ ॐ मृत्यवे न० ३॥ ॐ अंतकाय न० ३॥ ॐ वैवस्वताय न० ३ ॥ ॐ कालाय० ३ ॥ ॐ सर्वभूतक्षयाय० ३॥ ॐ उदुंबराय०३ ॥ ॐ दध्नाय०३॥ ॐ नीलाय०३॥ ॐपरमेष्ठिने०३॥ॐवृकोदराय०३॥ ॐ चित्राय० ३॥ ॐचित्रगुप्ताय० ३॥ इति चतुर्दश यमान् प्रत्येकं सतिलांजलित्रयेण तर्पयेत्॥ ॐ आगच्छंतु मे पितर इमं गृह्णंत्वपोञ्जलिमिति पितॄनावाह्य ॥ उदीरतामवरउत्परास उन्मध्यमाः पितरः सोम्यासः असुंय्य ऽईयुरवृकाऽऋतज्ञास्ते नोवंतु पितरोहवेषु ॥ ॐ अद्यामुकगोत्रोऽस्मत्पितामुकशर्मा तृप्यतामिदं जलं सतिलं तस्मै स्वधा इति मंत्रेण वाक्येन च प्रथमांजलिं दद्यात् ॥ ॐअंगिरसोनः पितरोनवग्वा अथर्वाणोभृगवः सोम्यासः तेषां व्वयꣳसुमतौ यज्ञियानामपि भद्रेसौमनसेस्याम इति मंत्रेण वाक्येन च द्वितीयांजलिं दद्यात् ॥ ॐ आयंतुनः पितरः सोम्यासोऽग्निष्वा-

त्ता ३ पथिभिर्देवयानैः अस्मिन्यज्ञेस्वधयामदंतोधि-ब्रुवंतुतेवंत्वस्मानिति मंत्रेण वाक्येन च तृतीयांजलिं दद्यात् ॥ ॐ ऊर्ज्जं वहंतीरमृतं घृतं पयः कीलालं परिस्रुतंस्वधास्थ तर्पयंतमेपितॄन् ॥ ॐ अद्यामुक-गोत्रोऽस्मत्पितामहोऽमुकशर्मा तृप्यतामिदं जलं स-तिलं तस्मै स्वधा इति मंत्रेण वाक्येन च पितामहाय प्रथमांजलिं दद्यात् ॥ ॐ पितृभ्यः स्वधायिभ्यः स्वधानमः पितामहेभ्यः स्वधायिभ्यः स्वधानमः प्रपितामहेभ्यः स्वधायिभ्यः स्वधानमः अक्षन् पितरोमीमदंतपितरोतीतृपंतपितरः पितरः शुंधध्व मिति द्वितीयांजलिं ० ॥ ॐ येचेहपितरो येचनेहयां श्च विद्मयां उचनप्रविद्म॥ त्वंवेत्थयतितेजातवेदः स्व धाभिर्यज्ञꣳसुकृतंजुषस्व इति तृतीयांजलिं दद्यात् ॥ ॐ मधुवाताऋतायतेमधुक्षरंतिसिंधवः ॥ माध्वीर्नः

मुंत्वोषधीः ॥ ॐ अद्यामुकगोत्रोऽस्मत्प्रपितामहोऽमुकशर्मा तृप्यतामिदं तिलोदकं तस्मै स्वधा इति मंत्रेण वाक्येन च प्रपितामहाय प्रथमांजलिं दद्यात् ॥ ॐ मधुनक्तंमुतोषसोमधुंमत्पार्थिवꣳरजः ॥ मधुद्यौरस्तुनः पिता इति द्वितीयांजलिं दद्यात्॥ ॐ मधुमान्नो वनस्पतिर्मधुंमांअस्तुसूर्यः॥ माध्वीर्गावोंभवंतुनः इति मंत्रेण वाक्येन च तृतीयांजलिं प्रपितामहाय दद्यात् ॥ ततः ॐ तृप्यध्वं तृपध्वंतृप्यध्वमिति पित्रादिभ्योंऽजलित्रयं दद्यात् ॥ ॐअद्यामुकगोत्राऽस्मन्माता अमुकदेवी तृप्यतामिदं जलं सतिलं तस्यै स्वधा इति मातरं तर्पयेत् ॥ एवमेव पितामहीं प्रपितामहीं च तर्पयेत् ॥ एवं सापत्नमातरमपि ॥ ततः ॐ नमोवः पितरोरसाय नमोवःपितरःशोषायनमोवः पितरो जीवाय नमोवः पितरःस्वधायै नमोवः पितरोघोराय नमोवः पितरोमन्यवे नमोवः पितरः पितरो नमोवोगृहान्नः पितरोदत्तसतोवः पितरोदेष्मैतद्वः पि-

तरो ब्वासुऽआधत्त इति मंत्रं पठित्वा॥ ॐ अद्यामुक-गोत्रोऽस्मन्मातामहोऽमुकशर्मा तृप्यतामिदं तिलोदकं तस्मै स्वधा ॥ इति मातामहायांजलित्रयं दद्यात् ॥ एवं प्रमातामहाय वृद्धप्रमातामहाय च दद्यात् ॥ ततः ॐ अद्यामुकगोत्राऽस्मन्मातामही अमुकदेवी तृप्य-तामिदं जलं सतिलं तस्यै स्वधा ॥ इति मातामहीं एवमेव प्रमातामहीं वृद्धप्रमातामहीं च तर्पयेत् ॥ ततः ॥ आचार्यं तत्पत्नीं भार्यां पुत्रं पितृव्यं तत्पत्नीं मातुलं तत्पत्नीं भ्रातरं तत्पत्नीं पितृष्वसारं मातृष्वसारं श्वशुरं श्वश्रूं पुत्रिकां भगिनीं पितृव्यपुत्रं भ्रातृपुत्रं मातुलपुत्रं श्यालकं गुरुपुत्रं जामातरं भामं पौत्रं भागिनेयं दौहित्रं मित्रं सुहृच्छिष्यांश्च तर्पयेत्॥ ततः ॥ ॐ देवासुरास्तथा यक्षा नागा गंधर्वराक्षसाः॥ पिशाचा गुह्यकाः सिद्धाः कूष्मांडास्तरवः खगाः ॥ ॥ १ ॥ जलेचरा भूनिलया वाय्वाधाराश्च जंतवः प्रीतिमेते प्रयांत्वाशु मद्दत्तेनांबुनाखिलाः ॥ २ ॥ नर-केषु समस्तेषु यातनासु च ये स्थिताः ॥ तेषामाप्या-

यनायैतद्दीयते सलिलं मया ॥ ३ ॥ ॐ ये बान्धवा-बान्धवाश्च येऽन्यजन्मनि बान्धवाः॥ ते तृप्तिमखिला यांतु यश्चास्मत्तोऽभिवाञ्छति ॥ ये मे कुले लुप्तपिंडाः पुत्रदारविवर्जिताः ॥ तेषां हि दत्तमक्षय्यमिदमस्तु तिलोदकम् ॥ ५ ॥ आब्रह्मस्तंबपर्यंतं देवर्षिपितृमानवाः ॥ तृप्यंतु पितरः सर्वे मातृमातामहादयः ॥ ६ ॥ अतीतकुलकोटीनां सप्तद्वीपनिवासिनाम् ॥ आब्रह्मभुवनाल्लोकादिदमस्तु तिलोदकम् ॥ ७ ॥ इति मंत्रैः पृथक् पृथक् सतिलमुदकं दद्यात् ॥ ततः ॥ ये के चास्मत्कुले जाता अपुत्रा गोत्रिणो मृताः ॥ ते गृह्णन्तु मया दत्तं वस्त्रनिष्पीडनोदकमिति स्नानवस्त्रं निष्पीडयेत् ॥ ततः सव्यमाचमनं च कृत्वा तर्पणोत्तरकर्म कुर्यात् ॥ तत्र क्रमः ॥ ॐनमो विवस्वते ब्रह्मन् भास्वते विष्णुतेजसे ॥ जगत्सवित्रे शुचये नमस्ते कर्मदायिने ॥ १ ॥ इति मंत्रेण सूर्याय सतिलांजलिं दत्त्वा आचम्य ब्रह्मादीन् पुष्पैरर्चयेत् ॥ तत्र क्रमः ॥ ॐब्रह्मजज्ञानं प्रथमं पुर ॥

द्विसींमत÷मुरुचोव्वेन आंव॥सबुध्न्या उपमा अंस्य विष्ठाःसतश्च योनिमसंतश्चव्विवं÷ ॐ ब्रह्मणे नमः ॥ ॐइदं विष्णुर्विर्चक्रमे त्रेधा निदंधे पदंसमूंढमस्य पांॅंसुरे ॐ विष्णवे नमः ॥ ॐ नमंस्ते रुद्र मुन्यवं उतोत इर्ष वें नम÷ । बाहुभ्यामुतते नमं÷ । ॐरुद्राय नमः ॥ ॐआकृष्णेन रजंसा वर्तमानो निवेशयंन्नमृतं मर्त्यं च हिरण्ययेंन सविता रथेना देवोयांति भुवंनानि पश्यंन् ॐ सूर्याय नमः ॥ ॐ मित्रस्यंचर्षणीधृतोवों देवस्यं सानसि द्युम्नंचित्रं श्रवस्तमं ॐमित्राय नमः ॥ ॐ इमम्मेंवरुणश्रुधीहवंमद्याचंमृडय त्वामंवस्युराचंके ॐ वरुणाय नमः ॥ इति ब्रह्मादीन्संपूज्योत्थाय ॥ ॐ अदृश्रमस्यकेतवोविरश्मयोजनां २ ॥ ऽअनु भ्राजन्तोऽअग्नयोंयथा उपयामगृंहीतोसिसूर्यायत्वा भ्राजायैषतेयोनिः सूर्यायत्वाभ्राजायसूर्य्यभ्राजिष्टभ्राजिष्ट

स्त्वंदेवेष्वसिभ्राजिष्ठोहम्मनुष्येषुभूयासम् ॥ १ ॥
ॐ हꣳसः शुचिषद्वसुरन्तरिक्षसद्धोताव्वेदिषदतिथि-
र्दुरोणसत् नृषद्वरसदृतसद्व्योमसदब्जागोजाऽऋतजाऽ
अद्रिजाऽऋतंबृहत्॥२॥ इत्याभ्यांसूर्यमुपस्थायप्रदक्षि-
णीकृत्य ॥ आदित्याय नमः इत्यादित्यं नमस्कृत्य
॥ ॐ दिग्भ्यो नमः । ॐ दिग्देवताभ्यो नमः । ॐ
ब्रह्मणे नमः । ॐ अग्नये नमः । ॐ पृथिव्यै नमः ।
ॐ ओषधिभ्यो नमः । ॐ वाचे नमः । ॐ वाचस्प-
तये नमः । ॐ विष्णवे नमः । ॐ महद्भ्यो नमः ।
ॐ अद्भ्यो नमः । ॐ अपांपतये नमः । ॐवरुणाय
नमः ॥ इति नमस्कृत्य उदकं च दत्वा ॥ ॐ सव
र्चैसापयसासंतनूभिरगंन्महिमनंसासꣳशिवेनत्वष्टा-
सुसदत्रोविदधातुरायोनुमार्ष्टुतन्वीपद्विलिष्टं इति जप-
न्करद्वयेन मुखं संस्पृश्य ॐ देवागातुविदोगातुंवित्वा-
गातुमितमनसस्पतइमंदेवयज्ञꣳस्वाहावातेधाः ॥

इति विसर्जयेत् ॥ एवं विधिना जीवत्पितृकेणापि ब्रह्मादिचित्रगुप्तपर्यंतं तर्पणं कृत्वा स्वपित्रादितर्पणं वस्त्रनिष्पीडनं च वर्जयित्वा ब्रह्मार्चनादिस्नानादि- कर्मांगभूतदेवताविसर्जनपर्यन्तं तर्पणविधिर्विधेयः ॥ इति तर्पणप्रयो ः ॥

अथ पंचदेवपूजाप्रयोगः ॥ तत्रादौ आचम्य प्रा- णानायम्य देशकालौ संकीर्त्य श्रीपरमेश्वरप्रीत्यर्थं यथाशक्ति यथामिलितोपचारैः श्रीमहाविष्णुपूजां करिष्ये ( पंचायनतपक्षे तु श्रीरुद्रविनायकसूर्यशक्ति- परिवृतश्रीमहाविष्णुपूजां करिष्ये ) इति संकल्प्य आ- सनादि विधाय घंटानादं च कृत्वा शंखोदकेनात्म- सहितं पूजासंभारं प्रोक्ष्य पुरुषसूक्तेन न्यासं कुर्यात ॥ ॐ सहस्रशीर्षेति षोडशर्चस्य सूक्तस्य नारायण ऋषिः पुरुषोदेवताऽनुष्टुप्छंदोऽन्त्यायात्रिष्टुप्छंदोन्या से पूजायां च विनियोगः ॥ ततः ॥ ॐ सहस्र शीर्षेति वामकरे ॥ १ ॥ ॐ पुरुषऽएवेदᳪंसर्वमिति

दक्षिणकरे२॥ॐ एतावानस्य महिमेतिवामपादे३ ॥ॐ त्रिपादूर्ध्वइतिदक्षिणपादे४॥ॐततोविराडितिवामजानुनि५॥ॐ तस्माद्यज्ञात्सर्वहुत इतिदक्षिणजानुनि ६॥ ॐतस्माद्यज्ञात्सर्वहुतऽऋच इति वामकटौ ॥७॥ ॐ तस्मादश्वा इति दक्षिणकटौ ८॥ ॐ तं यज्ञमिति नाभौ ९॥ ॐ यत्पुरुषं व्यदधुरिति हृदि १० ॥ ॐ ब्राह्मणोस्यमुखमिति कंठे ११ ॥ ॐ चंद्रमामनेस इति वामबाहौ १२ ॥ ॐ नाभ्याऽआसीदिति दक्षिणबाहौ १३ ॥ ॐ यत्पुरुषेणेति मुखे १४ ॥ ॐसप्तास्यासन्निति अक्ष्णोः १५ ॥ ॐयज्ञेनं यज्ञमिति मूर्ध्नि १६ ॥ अथ पंचाङ्गन्यासः ॥ ॐ अद्भ्यः सम्भृतारिति हृदये१ ॥ ॐ वेदाहमेतमिति शिरसि२॥ ॐ प्रजापतिश्च इति शिखायाम् ३ ॥ ॐ योदेवेभ्य आतपति इति कवचायहुम् ४ ॥ ॐरुचंब्राह्ममिति अस्त्राय फट् ५ ॥ इति स्वदेहे न्यासं कृत्वा एवमेव

देवाङ्गन्यासं कुर्यात् ॥ ततः ॥ कलशं शंखघंटे च संपूज्य देवं ध्यायन् पूजां कुर्यात् ॥ तत्र प्रयोगः ॥ ॐसहस्रशीर्षापुरुषः सहस्राक्षः सहस्रपात्सभूमिंठं सर्व्वतस्पृत्वात्यतिष्ठद्दशांगुलं ॐ श्रीमहाविष्णवे नमः आवाहनं समर्पयामि ( पंचायतनपक्षे श्रीविष्णुरुद्र-विनायकसूर्यशक्तिभ्यो नमः आवाहनं ० एवं सर्वत्र ) इत्यावाहनं ० १ ॥ ( शालिग्रामबाणलिंगादावावा-हनाभावान्मंत्रेण पुष्पं निवेदयेत् ) ॐ पुरुषऽएवेदठं सर्व्वंय्यद्भूतंयच्चभाव्यम् ॥ उतामृतत्वस्येशानोयदन्नेना-तिरोहति इत्यासनं ० २ ॥ ॐ एतावानस्यमहि-मातोज्यायाँश्चपूरुषः ॥ पादोस्य व्विश्वाभूतानि त्रिपा-दस्यामृतन्दिवि इति पाद्यं० ३ ॥ ॐ त्रिपादूर्द्ध्वऽउ-दैत्पुरुषः पादोस्येहाभवत्पुनः ॥ ततोव्विष्वङ्व्यं-क्रामत्साशनानशनेऽअभि इत्यर्घ्यं ० ४ ॥ ॐ ततो-व्विराडजायतव्विराजोऽअधिपूरुषः ॥ सजातोऽअत्य-

रिच्यत पश्चाद्भूमिमथोपुरः इत्याचमनं० ५ ॥ ॐ तस्माद्यज्ञात्सर्व्वहुतः सम्भृतम्पृषदाज्यम् ॥ पशूँस्ताँश्चक्रेव्वायव्यानारण्या ग्राम्याश्च ये इति स्नानं ० ६ ॥ ( अत्र संभवे सति ॐ पयः पृथिव्यामित्यादि पृथक्पृथक् मंत्रेण पंचामृतस्नानानि कारयित्वा पुरुषसूक्तेनाभिषेकः कार्यः ) ॐ तस्माद्यज्ञात्सर्व्वहुतऽऋचः सामानिजज्ञिरे ॥ छंदाᳯंसि जज्ञिरे तस्माद्यजुस्तस्मादजायत इति वस्त्रं० ( वस्त्रांते आचमनीयं० ) ॥ ७ ॥ ॐ तस्मादश्वाऽअजायन्तयेकेचोभयादतः ॥ गावोहजज्ञिरेतस्मात्तस्माज्जाताऽअजावयः इति यज्ञोपवीतं० ( आचमनीयं० ) ८ ॥ ॐ तंयज्ञंबर्हिषिप्रौक्षन्पुरुषञ्जातमग्रतः ॥ तेनदेवाऽअयजन्तसाध्याऽऋषयश्चये इति गंधं० ९ ॥ ॐ यत्पुरुषंव्यदधुः कतिधाव्यकल्पयन् ॥ मुखङ्किमस्यासीत्किंबाहूकिमूरूपादाऽउच्येते इति

तुलसीपत्रपुष्पाणि० १० ॥ ॐ ब्राह्मणोस्यमुखमासी-
द्बाहूराजन्यः कृतः। ऊरू तदस्य यद्वैश्यः पद्भ्याᳪ
शूद्रोऽअजायत इति धूपं० ११ ॥ ॐ चंद्रमा मनसो
जातश्चक्षोः सूर्य्योऽअजायत ॥ श्रोत्राद्वायुश्च प्राणश्च
मुखादग्निरजायत इति दीपं० १२ ॥ ॐ नाभ्याऽ
आसीदंतरिक्षᳪ शीर्ष्णोद्यौः समवर्तत॥पद्भ्याम्भूमि-
र्दिशः श्रोत्रात्तथालोकाँ अकल्पयन् इति नैवेद्यं०
आचमनं च० १३ ॥ ॐयत्पुरुषेणहविषादेवायज्ञम-
तन्वत॥ व्वसन्तोस्यासीदाज्ज्यङ्ग्रीष्मऽइध्मः शरद्ध-
विः इति नमस्कारं० १४ ॥ ततः कर्पूरेण नीराजनं
कार्यम् ॥ ॐसप्तास्यासन्परिधयस्त्रिः सप्तसमिधः
कृताः ॥ देवायद्यज्ञन्तन्वानाऽअबध्नन्पुरुषंपशुम् इति
प्रदक्षिणम् ॥ १५ ॥ ॐ यज्ञेनयज्ञमयजन्तदेवास्ता-

१ विष्णोश्चतस्रः ४, शिवस्य तिस्रः ३, गणपतेरपि तिस्रः ३, देव्या एका १, सूर्यस्य सप्त ७ ॥

गच्छ इह तिष्ठ पूजां गृहाण मम संमुखो भव ॥ १ ॥
ॐ भूर्भुवःस्वः भरद्वाजाय नमः भरद्वाजम् आवा-
हयामि भो भरद्वाज इहाग० ॥ २ ॥ ॐ भूर्भुवः स्वः
गौतमाय नमः गौतमम् आवाहयामि भो गौ-
तम इगच्छ० ॥ ३ ॥ ॐ भूर्भुवःस्वः अत्रये नमः अ-
त्रिम् आवाहयामि भो अत्रे इहाग० ॥ ४ ॥ ॐ भूर्भु-
वःस्वः जमदग्नये नमः जमदग्निम् आवाहयामि भो-
जमदग्ने इहाग० ॥५॥ ॐ भूर्भुवःस्वः वसिष्ठाय नमः
वसिष्ठम् आवाहयामि भो वसिष्ठ इहाग० ॥ ६ ॥ ॐ
भूर्भुवःस्वः विश्वामित्राय नमः विश्वामित्रम् आवाह-
यामि भो विश्वामित्र इहाग० ॥७॥ ॐ भूर्भुवःस्वः अरुं-
धत्यैनमः अरुंधतीम् आवहयामि भो अरुंधति इहा-
गच्छइह तिष्ठ पूजां गृहाण मम संमुखा सुप्रसन्ना वर-
दाभव ॥ ८ ॥ इत्यावाह्य ॥ ॐ मनोजूतिरिरिति० अरुं-
धतीसहिताः सप्तर्षयः सुप्रतिष्ठिता वरदा भवंतु ॥
इति प्रतिष्ठाप्य॥ ॐ इमावेवगौतेमभरद्वाजावयमेवगौ-
तमोऽयंभरद्वाजाइमामेवविश्वामित्रजमदग्नीअयमेववि-

श्वामित्रोयंजमदग्निरिमावेवव्वसिष्ठकश्यपावयमेववसि-
ष्ठोयंकश्यपोव्वागेवात्रिर्वाचाह्युन्नमद्यतेतिर्हवैनामैतद्य-
दत्रिरितिसुर्व्वस्यात्ताभवतिसुर्वस्यान्नंभवतिय्ऽएवंवेद ॥
इति पठेत् ॥ ततः सर्वे आचम्य प्राणानायम्य देश-
कालौ संकीर्त्य ॥ ममात्मनःश्रुतिस्मृतिपुराणोक्तफल
प्राप्त्यर्थं श्रीपरमेश्वरप्रीत्यर्थम् उत्सर्जनाङ्गत्वेन अरु-
धतीसहितकश्यपादिसप्तर्षिपूजनमहंकरिष्ये ॥ तत्रादौ
निर्विघ्नार्थं गणपतिस्मरणं च करिष्ये इति संकल्प्य-
ॐ सुमुखश्चैकदंतश्चेत्यादिगणपतिस्मरणं कृत्वा ऋ-
षीन् ध्यायेत् ( ध्यानम् ) ॐसुप्तऽऋषयुःप्प्रतिहि
ताःशरीरेसुप्तरक्षंतिसदमप्प्रमादम्॥ सप्तापःस्वपतो ऽलो
कमीयुस्तत्रंजाग्रतोऽअस्वप्नजौसत्रसदौचदेवौ॥ १॥ ॐ-
इदंव्विष्णुर्विचक्रमेत्रेधानिदधेपदम् ॥ समूढमस्यपाᳬ
सुरेस्वाहा॥ २॥ ॐसहस्रशीर्षापुरुषःसहस्राक्षःसहस्रपा-
त्॥सभूमिᳬसुर्व्वतस्पृत्वात्यतिष्ठद्दशाङ्गुलम्॥ ३॥ ॐभू

र्भुवः स्वः अरुंधतीसहकश्यपादिऋषिभ्योनमः ध्यानंस-
मर्पयामि॥ १॥ॐपुरुषऽएवेदꣳसर्व्वंयद्भूतंयच्चभाव्यम्॥
उतामृतत्वस्येशानोयदन्नेनातिरोहति ॥ ॐ भूर्भुवः स्वः
अरुंध० नमः आसनंसमर्पयामि॥२॥ ॐ एतावानस्य
महिमातोज्यायाँश्चपुरुषः ॥ पादोस्यव्विश्वाभूतानित्रि
पादस्यामृतंदिवि॥ ॐ भूर्भुवः स्वः अरुंधतीस० नमः
पाद्यं समर्पयामि ॥ ३ ॥ ॐ त्रिपादूर्ध्वऽउदैत्पुरुषः
पादोस्येहाभवत्पुनः ॥ ततोव्विष्वङ्व्यक्रामत्सा-
शनानशनेऽअभि० ॥ ॐ भूर्भुवः स्वः अरुंध०
नमः अर्घ्यं० ॥ ४ ॥ ॐ ततोव्विराडजायत व्विरा
जोऽअधिपूरुषः ॥ सजातोऽअत्यरिच्यतपश्चाद्भूमिम-
थोपुरः॥ ॐ भूर्भुवस्वः अरुंध० नमः आचमनीयं०॥
॥ ५ ॥ ॐ तस्माद्यज्ञात्सर्वहुतःसम्भृतंपृषदाज्यम् ॥
पशूँस्ताँश्चक्रेवायव्यानारण्याग्राम्याश्चये०॥ ॐ भूर्भुवः

स्वः अरुंध० नमः स्नानं० ॥ ६ ॥ ॐ पंचनद्यः सरस्वतीमपियंतिसस्रोतसः सरस्वतीतुपंचधासोदेशेभवत्सरित्॥ ॐ भूर्भुवः स्वः अरुंधती० पंचामृतस्नानं०॥ ॥ ७ ॥ ॐ गंधद्वारांदुराधर्षांनित्यपुष्टांकरीषिणीम्॥ ईश्वरींसर्वभूतानांतामिहोपह्वयेश्रियं ॐ भूर्भुवःस्वः अरुंध० नमः गंधोदकस्नानं० ॥ ८ ॥ ( ततः पुरुषसूक्तेनाभिषेकंकुर्यात् ) ॥ ॐ तस्माद्यज्ञात्सर्वहुतऽऋचः सामानिजज्ञिरे। छंदांसिजज्ञिरेतस्माद्यजुस्तस्मादजायत ॥ ॐ भूर्भुवः स्वः अरुंध० नमः वस्त्रंसमर्पयामि ॥ ॥९॥ ॐ तस्मादश्वाऽअजायंतयेकेचोभयादतः ॥ गावोहजज्ञिरेतस्मात्तस्माज्जाताऽअजावयः ॥ ॐ भूर्भुवः स्वः अरुंध० नमः यज्ञोपवीतंस० ॥ १० ॥ ॐ तंयज्ञंबर्हिषिप्रौक्षन्पुरुषंजातमग्रतः ॥ तेनदेवाऽअयजंतसाध्याऽऋषयश्चये ॥ ॐ भूर्भुवः स्वः

अरुंध० नमः गंधं समर्पयामि ॥ ११ ॥ ॐ अक्षन्नमीमदंतह्यवप्रियाऽअधूषत॥अस्तोषतस्वभानवोव्विप्रानविष्टयामतीयोजान्विंद्रतेहरी ॥ ॐ भूर्भुवः स्वः अरुंध० नमः अक्षतान् सम० ॥ १२ ॥ ॐ अहिरिवभोगैःपर्य्येतिबाहुंज्ज्यायाहेतिम्परिबाधमानः॥हस्तघ्नोव्विश्वाव्वयुनानिव्विद्वान्पुमान्पुमाᳬसंपरिपातुव्विश्वतः॥ ॐ भूर्भुवः स्वः अरुंध० नमः हारिद्राकुंकुमादिद्रव्याणि समर्पयामि ॥ १३ ॥ ॐ यत्पुरुषंव्यदधुःकतिधाव्यकल्पयन् ॥ मुखंकिमस्यासीत्किम्बाहूकिमूरूपादाऽउच्यते ॥ ॐ भूर्भुवः स्वः अरुंध० नमः पुष्पाणि ० ॥ १४ ॥ ॐ ब्राह्मणोस्यमुखमासीद्बाहूराजन्यः कृतः ॥ ऊरूतदस्ययद्वैश्यः पद्भ्याᳬशूद्रोऽअजायत ॥ ॐ भूर्भुवः स्वः अरुंध० नमः धूपं सम० ॥ १५ ॥ ॐ चंद्रमामनसोजातश्चक्षोःसूर्य्योऽअजायत ॥ श्रोत्राद्वायुश्चप्राणश्चमुखादग्निरजायत ।

ॐ भूर्भुवः स्वः अरुं ० नमः दीपं सम ० ॥ १६ ॥
ॐ नाभ्याऽआसीदन्तरिक्षꣳशीर्ष्णोद्यौः समवर्त्तत ॥
पद्भ्यांभूमिर्दिशःश्रोत्रात्तथालोकाँ२ऽअकल्पयन्॥ॐ
भूर्भुवः स्वः अरुंध० नमः नैवेद्यं स० ॥ १७ ॥
( नैवेद्यांते आचमनीयं समर्पयामि ) ॐ याः फलि-
नीर्याऽअफलाऽअपुष्पायाश्चपुष्पिणीः॥बृहस्पतिप्र-
सूतास्तानोमुंचत्वꣳहसः ॥ ॐ भूर्भुवः अरुंध० नमः
फलानि सम ० ॥ १८ ॥ ॐ यत्पुरुषेणहविषादेवा-
यज्ञमतन्वत ॥ व्वसन्तोस्यासीदाज्यंग्रीष्मऽइध्मःश-
रद्धविः॥ ॐ भूर्भुवः स्वः अरुंधती० नमः तांबूलंस०
॥ १९ ॥ ॐ हिरण्यगर्भः समवर्त्तताग्रेभूतस्यजातःप-
तिरेकऽआसीत ॥ सदाधारपृथिवींद्यामुतेमांकस्मैदेवा-
यहविषाव्विधेम॥ ॐ भूर्भुवः स्वः अरुंधती० नमःदक्षि
णां सम ० ॥ २० ॥ ॐ इदꣳहविः प्प्रजननम्मेऽअ-
स्तुदशवीरꣳसर्वगणꣳस्वस्तये॥आत्मसनिप्रजास-

निपशुसनिलोकसन्यंभयभयसनिअग्निःप्रजाम्बहुला म्मेकरोत्वन्नम्पयोरेतांऽअस्मासुधत्त ॥ ॐ भूर्भुवः स्वः अरुंधतीसहितक० नमः कर्पूरार्त्तिक्यं समर्पयामि२१ ॐ सप्तास्यासन्परिधयस्त्रिःसप्तसमिधः कृताः ॥ देवा-यद्यज्ञन्तंन्वानाऽअबध्नन्पुरुषंपशुम् ॥ ॐ भूर्भुवः स्वः अरुंधतीसहित ० प्रदक्षिणां सम० ॥ २२ ॥ ॐ यज्ञेनयज्ञमयजंतदेवास्तानिधर्माणिप्रथमान्यासन् ॥ तेहनाकंमहिमानःसचन्तयत्रपूर्व्वेसाध्याःसन्तिदेवाः ॥ ॐ भूर्भुवः स्वः अरुंध ० मंत्रपुष्पांजलिं समर्पया-मि ॥ २३ ॥ ( प्रार्थना ) ॐ मंत्रहीनं क्रियाहीनं भक्तिहीनं सुरेश्वर ॥ यत्पूजितं मया पूर्वं परिपूर्णं तद-स्तु मे ॥ ॐ भूर्भुवः स्वः अरुंध ० नमः नमस्कारं समर्पयामि ॥ २४ ॥ अनेन मया वेदोत्सर्जनाङ्ग-त्वेन कृतेन ध्यानावाहनादिषोडशोपचारैः पूजनेन अरुंधतीसहितकश्यपादिसप्तर्षयः प्रीयंतां न मम ॥ ॐ तत्सद्ब्रह्मार्पणमस्तु ॥ इति ऋषिपूजनम् ॥

अथ स्वपितृभ्यो यज्ञोपवीतदानम् ॥ तत्रादौ सर्वे प्राचीनावीती दक्षिणमुखाः स्वपुरतो यज्ञोपवीतानिनिधाय कुशोदकं गृहीत्वा ॐ अमुकगोत्रेभ्यः अस्मत्पितृपितामहप्रपितामहेभ्यः(तथा द्वितीयं) ॐअमुकगोत्रेभ्यः अस्मन्मातामहप्रमातामहवृद्धप्रमातामहेभ्यः ॥ ( तृतीयं ) ॐ कव्यवाडनलादिदिव्यपितृभ्यः इमानि यज्ञोपवीतानि स्वधा संपद्यंताम् इतिसमर्पयेत् ॥ ( जीवत्पितृकैरपि पितुः पित्रादिभ्यो मातामहादिभ्यश्च यज्ञोपवीतानि देयानि ) ततः सव्यं कृत्वा सर्वान् ब्राह्मणान् गंधादिना संपूज्य तेभ्यो यज्ञोपवीतानि दत्त्वा सर्वैः सह स्वयमपि धार्याणि ॥

अथ यज्ञोपवीतधारणप्रयोगः ॥ आचम्य प्राणानायम्य देशकालौ संकीर्त्य ॥ मम श्रौतस्मार्तकर्मानुष्ठानसिद्धिद्वारा श्रीपरमेश्वरप्रीत्यर्थं नूतनयज्ञोपवीतधारणमहं करिष्ये तदंगत्वेन यज्ञोपवीताभिमंत्रणं करिष्ये ॥ इति संकल्प्य । ॐ इ॒दं विष्णु॒र्विच॑क्रमे॒ त्रे॒धा॒ नि द॑धे प॒दम् ॥ समू॑ढमस्य पाँ॒सु॒रे स्वाहा ॥

ॐ आपोहिष्ठामयोभुवइत्यादिमंत्रैरुपवीतानि प्रक्षाल्य अनंतरं दशगायत्रीमंत्रैरभिमंत्र्य पुष्पाण्यादाय तंतुषु देवतानामावाहनं कुर्यात् ॥ तद्यथा–प्रथमतंतौ ॐ कारमावाहयामि ॥ १ ॥ द्वितीयतंतौ ॐ अग्निमावाहयामि ॥ २ ॥ तृतीयतंतौ ॐ सर्पानावा० ॥ ३ ॥ चतुर्थतन्तौ ॐ सोममावाह० ॥ ४ ॥ पंचमतन्तौ ॐ पितॄनावाहयामि० ॥ ५ ॥ षष्ठ-तन्तौ ॐ प्रजापतिं० ॥ ६ ॥ सप्तमतन्तौ ॐ अनि-लं० ॥ ७ ॥ अष्टमतन्तौ ॐ सूर्यमावाह० ॥ ८ ॥ नवमतन्तौ ॐ विश्वान्देवानावाहयामि ॥ ९ ॥ ( अथ ग्रंथिदेवतानामावाहनम् ) ग्रंथिमध्ये ॐ ब्रह्मणे नमः ब्रह्माणमावाहयामि ॥ १ ॥ ॐ विष्णवे नमः विष्णुमावाह० ॥ २ ॥ ॐ रुद्राय नमः रुद्रमावाह-यामि ॥ ३ ॥ ततः ॐ प्रणवाद्यावाहितदेवताभ्यो नमः यथास्थानमहं न्यसामि इत्यावाह्य गंधादिभिः पूजयेत् ॥ ततो ध्यानम् ॥ ( ॐ प्रजापतेर्यत्सहजं पवित्रं कार्पाससूत्रोद्भवब्रह्मसूत्रम् । ब्रह्मत्वसिद्ध्यै च

यशःप्रकाशं जपस्य सिद्धिं कुरु ब्रह्मसूत्रम् ) यज्ञोपवीतमिति मंत्रस्य परमेष्ठी ऋषिः लिङ्गोक्ता देवता त्रिष्टुप्छन्दः यज्ञोपवीतधारणे विनियोगः ॥ ॐ यज्ञोपवीतम्परमं पवित्रं प्रजापतेर्यत्सहजं पुरस्तात् । आयुष्यमग्र्यं प्रतिमुञ्च शुभ्रं यज्ञोपवीतं बलमस्तु तेजः ॥ यज्ञोपवीतमसि यज्ञस्य त्वा यज्ञोपवीतेनोपनह्यामि ॥ अनेन मंत्रेण यज्ञोपवीतानां पृथक्पृथक् धारणं कुर्यात् ॥ तत आचमनं कृत्वा ॥ ॐ एतावद्दिनपर्यंतं ब्रह्म त्वं धारितं मया ॥ जीर्णत्वात्त्वत्परित्यागो गच्छ सूत्र यथासुखम् ॥ १ ॥ इति मंत्रेण जीर्णयज्ञोपवीतं शिरोमार्गेण निःसार्य भूमौ त्यजेत् ॥ पश्चाद्यथाशक्ति गायत्रीजपं कुर्यात् ॥ ॐ तत्सद्ब्रह्मार्पणमस्तु ॥ यस्य स्मृत्या० ॥ इति यज्ञोपवीतधारणप्रयोगः ॥

अथोत्सर्गाङ्गमृषितर्पणम् ॥ आचम्य प्राणानायम्य देशकालौ संकीर्त्य छंदसां क्वचिदनध्यायादिकाले पठनादनधिकारिभिः श्रवणाच्च प्राप्तमालिन्यस्य निरा-

सार्थमुत्सर्गाङ्गतर्पणमहं करिष्ये॥इति संकल्प्य दक्षिणं जान्वाच्य ईशानाभिमुखः सव्येन प्रागग्रैर्दर्भैर्देवतीर्थेन देवतर्पणं कुर्यात् ॥ ॐ विश्वे देवासऽआगतशृणुतामऽइमर्ठ०हवम् । एदम्बर्हिर्निषीदत ॥ १ ॥ विश्वेदेवाःशृणुतेमर्ठ०हवम्मेयेऽअन्तरिक्षेयऽउपद्यविष्ठ।येऽअग्निजिह्वाऽउतवायजत्राऽआसद्यास्मिन्बर्हिषिमादयध्वम् ॥ २ ॥ इति देवानावाह्य ॥ ॐ देवास्तृप्यंताम् । ॐ छंदांसि तृप्यंताम् । ॐ वेदास्तृप्यंताम् । ॐ ऋषयस्तृप्यंताम् । ॐ पुराणाचार्यास्तृप्यंताम् ॐ गंधर्वास्तृप्यंताम्। ॐइतराचार्यास्तृप्यंताम् । ॐ संवत्सरस्तृप्यताम् ॥ ततो वामं जान्वाच्य । दक्षिणामुखोऽपसव्येनतिलमिश्रितं जलमंजलौ गृहीत्वा। ॐअमुकगोत्राः अस्मत्पितरः अमुकशर्माणो वसुरूपास्तृप्यध्वं स्वधा नमः ॥ ॐ अमुकगोत्राः अस्मत्पितामहाः । अमुकशर्माणो रुद्ररूपास्तृप्यध्वं स्वधा नमः । ॐ अमुकगोत्राः अस्मत्प्रपितामहाः अमुकशर्माण आदित्यरूपास्तृप्यध्वं स्वधा नमः । इति स्वपितृ-

स्तर्पयेत् ॥ एवं मातृर्मातामहादींश्च तर्पयेत् ॥ ( जीवत्पितृकैः पुत्रैः शिष्यैश्चाचार्यस्य पितृतर्पणं कार्यं तद्यथा ॐ अमुकगोत्राः अस्मदाचार्य-पितरस्तृप्यध्वं स्वधा नमः इति ) तत आचमनम् । अथ वंशानां श्रुवणम् ॥ ॐ अयं पुर इत्यादिपंचानां साध्या ऋषयो यजूंषि प्राणभृतो देवताः । मूर्द्धेत्या-दिद्वयोर्देवा ऋषयो यजूंषि लिङ्गोक्ता देवताः । माछं-दइत्यादिषोडशानां प मेष्ठी ऋषिर्यजूंषि लिङ्गोक्ता देवताः । ऋषितर्पणे वि नेयोगः ॥ ॐ सप्तऽऋषय इत्यस्य याज्ञवल्क्य ऋषिः सप्तर्षयो देवताः जगती छंदः ऋषितर्पणे विनियोगः ॥ ॐ अयं पुरोभुवस्त स्यंप्राणोभौवायनोव्वसन्तःप्राणायनोगायत्रीव्वासंती-गायत्र्यै ॥ यत्रङ्गायत्राद्रुपाछंश्रुरुपाछंशोस्त्रिवृत्रिवृ-तोरथन्तरँवसिष्ठऽऋषिः प्रजापतिगृहीतयात्त्वयाप्राण-ङ्गृह्णामिप्रजाभ्यः ॥ १ ॥ अयंदक्षिणाव्विश्वकर्म्मात-स्यमनोव्वैश्वकर्मणंग्रीष्मोमानसस्त्रिष्टुब्ग्रैष्मीत्रिष्टुभः

स्वारठंस्वारादन्तर्य्यामोंतर्य्यामात्पंचदशःपंचदशाद्बृ
हद्बृहद्भरद्वाजऽऋषिः प्रजापतिगृहीतयात्वयामनोगृह्णामि-
प्रजाभ्यः ॥ २॥ अयंपश्चात् । अयंपश्चाद्विश्वव्यचास्तस्य
चक्षुर्वैश्वव्यचसंवर्षाश्चाक्षुष्योजगतीव्वार्षीजगत्याऽ-
ऋक्समममृक्समाच्छुक्रःशुक्रात्सप्तदशःसप्तदशाद्वैरूपंज
मदग्निर्ऋषिः प्रजापतिगृहीतयात्वयाचक्षुर्गृह्णामिप्रजा-
भ्यः ॥ ३ ॥ इदमुत्तरात्स्वस्तस्यश्रोत्रठंसौवठंशर-
च्छ्रौअनुष्टुप्शारद्यनुष्टुभऽऐडमैडान्मथोमन्मथिनऽएक
विठंशऽएकविठंशाद्वैराजंव्विश्वामित्रऋषिः प्रजापतिगृ
हीतयात्वयाश्रोत्रगृह्णामिप्रजाभ्यः ॥ ४ ॥ इयमुप-
रिमतिस्तस्यैव्वाङ्मात्याहैमंतोव्वाच्यःपंक्तिर्हैमवतीपं
क्त्यैनिधनवन्निधनवतऽआग्रयणऽआग्रयणात्रिणवत्रय-
स्त्रिठंशौत्रिणवत्रयस्त्रिठंशाभ्याᳪंशाक्वररैवतेव्विश्वक
र्मऽऋषिः प्रजापतिगृहीतयात्वयाव्वाचंगृह्णामिप्रजाभ्यो

लोकंताऽइंद्रम ॥ ५ ॥ लोकम्पृणच्छिद्रम्पृणाथोंसीदद्धुरात्वम् ॥ इंद्राग्नीत्वाबृहस्पतिरस्मिन्योनांवसीषदन् ॥ ६ ॥ ताऽअस्यसूददोहसःसोमंठ्ठश्रीणन्तिपृश्नय ॥ जन्मन्देवानांविशस्त्रिष्वारोचनेदिवः ॥ ७ ॥ इंद्रंविश्वाऽअवीवृधन्तसमुद्रव्यचसंगिरः रथीतमठ्ठरथीनांव्वाजानाठ्ठसत्पतिम्पतिम् ॥ ८ ॥ मूर्द्धाव्वयःप्रजापतिश्छंदःक्षत्रंव्वयोमयन्दंछंदोंविष्टुम्भोव्वयोधिपतिश्छंदोंविश्वकर्म्माव्वयःपरमेष्ठीछंदोंवस्तोव्वयोंविवलंछंदोव्वृष्णिर्व्वयोंविशालंदंपुरुषोव्वयस्तद्रंछंदोव्याघ्रोव्वयोनाधृष्टंछंदःसिंठ्ठहोव्वयश्छंदिश्छंदःपृष्ठवाडव्वयांबृहतीछंदऽउक्षाव्वयःककुप्छंदऽऋषभोव्वयःसतोबृहतीछंदोनड्वान्वयः ॥ ९ ॥ अनड्वान्वयःपंक्तिछंदोंधेनुर्व्वयोजगतीच्छंदस्त्र्यविर्व्वयस्त्रिष्टुप्छंदोदित्यवाड्वयोंविराट्छंदःपञ्चाविर्व्वयोगा-

यत्रीच्छंदस्त्रिवत्सोव्वयंऽउष्णिक्छंदसूर्ष्यवाङ्वयोनुष्टुप्-
छंदःलोकन्ताऽइन्द्रम् ॥ १० ॥ माच्छंदः प्रमाच्छंदः
प्रतिमाच्छंदोऽआस्रीन्वयश्छंदः पंक्तिश्छंदः । उष्णिक्छं
दोबृहतीछंदोनुष्टुप्छंदोव्विराट्छंदोगायत्रीच्छंदस्त्रिष्टुप्-
छंदोजगतीच्छंदः पृथिवीच्छंदः ॥ ११ ॥ पृ-
थिवीच्छंदोन्तरिक्षञ्छंदोद्यौश्छंदः समाश्छंदोनक्षत्रा-
णिच्छंदोव्वाक्छंदोमनश्छंदः कृषिश्छंदोहिरण्यञ्छन्दो
गौश्छंदोजाश्छंदोश्वच्छंदः ॥ १२ ॥ अग्निर्देवता-
व्वातोदेवतासूर्योदेवताचंद्रमादेवताव्वसवोदेवतारुद्रादे-
वतादित्यादेवतामरुतोदेवताव्विश्वेदेवादेवताबृहस्पतिर्दे
वतेन्द्रोदेवताव्वरुणोदेवता ॥ १३॥ एव्वच्छंदोव्वरिव-
च्छंदः शम्भूश्छंदः परिभूश्छंदः आश्छश्छंदोमनश्छंदो
व्यचश्छंदः सिंधुश्छंदः समुद्रश्छंदः सरिच्छंदः ककुप्छं-
दस्त्रिककुप्छंदः काव्यश्छंदोऽअंकुपञ्छंदोक्षरपंक्तिश्छं-

दः॑पदपंक्तिश्छंदो॑ विष्टारपंक्तिश्छंदः॑ क्षुरोभ्रजश्छंदऽआ-
च्छच्छंदः ॥ १४ ॥ आच्छच्छन्दः प्रच्छच्छन्दः संय-
च्छंदो॑ वियच्छन्दो बृहच्छंदो॑ रथंतरंच्छंदो॑ निकायश्छं-
दो॑ विवधश्छंदो गिरश्छंदो भ्रजश्छंदः॑ सर्ठस्तुपृछंदो॑ नुष्टु-
पृछंदऽएवश्छंदो वीरवश्छंदो वयश्छंदो॑ वयस्कृश्छंदो
विष्पर्द्धाश्छंदो॑ विशालञ्छन्दो॑ श्छदिश्छंदो॑ दूरोहणंछंद-
स्तन्द्रञ्छन्दो॑ऽअङ्काङ्कञ्छंदः ॥ १५ ॥ रश्मिना॑ सत्या
यसत्यञ्जिन्वप्रेतिना धर्मणा धर्मञ्जिन्वान्वित्या दिवा दिवं
जिन्वसंधिनान्तरिक्षेणान्तरिक्षंजिन्वप्रतिधिना पृथि-
व्या पृथिवींजिन्वविष्टंभेनवृष्ट्या वृष्टिंजि न्वप्रवयान्हाह
र्जिन्वानुयारात्र्या रात्रींजिन्वोशिजावसुभ्यो वसूंजिन्व
प्रकेतेनादित्येभ्यऽआदित्याञ्जिन्वतंतुनारायः १६॥
तंतुनारायस्पोषेणरायस्पोषंजिन्वसर्ठसर्प्पेणश्रुतायश्रु-
तंजिन्वैडेनौषधीभिरोषधीर्जिन्वोत्तमेनतनूभिस्तनू

न्वव्वयोसाधीतेनाधीतंजिन्वाभिजितातेजंसातेजोजि-
न्व।१७।प्रतिपदंसिप्प्रतिपदेंत्वानुपदंस्यनुपदेंत्वासम्य-
दंसिसम्यदंत्वातेजोसितेजंसेत्वात्रिवृदंसि॥१८॥त्रिवृ-
दंसित्रिवृतंत्वाप्प्रवृदंसिप्प्रवृतेंत्वाव्विवृदंसिव्विवृत्तंत्त्वा-
संवृदं।ससंवृत्तेंत्त्वाक्रमोस्याक्रमायत्वासंक्रमोसिसंक्रमा
यत्त्वोत्क्रमोस्युत्क्रमायत्वोत्क्रान्तिरस्युत्क्रान्त्यैरस्यु-
त्क्रान्त्यैत्त्वाधिपतिनोर्ज्जर्जंजिन्व ॥ १९॥ राज्ञीसिप्प्रा
चीदिग्वसवस्तेऽदेवाऽअधिपतयोग्निर्हेतीनाम्प्रतिधर्त्ता-
त्रिवृत्वास्तोमःपृथिव्याᳬश्रयत्त्वाज्यमुक्थमव्यथायै-
स्तभ्नातुरथन्तरᳬसामप्प्रतिष्ठित्याऽअन्तरिक्षऽऋषय-
स्त्वाप्प्रथमजादेवेषुदिवोमात्रयाव्वरिम्णाप्प्रथन्तुव्विध-
र्त्ताचायमधिपतिश्चतेत्त्वासर्व्वेसँविदानानाकस्यपृष्ठेस्व
र्गेलोकेयजमानंचसादयंतु ॥ २० ॥ व्विराडसिद
क्षिणादिग्रुद्रास्तेदेवाऽअधिपतयऽइन्द्रोहेतीनाम्प्रतिधर्त्ता

पंचदशस्त्वास्तोमः पृथिव्याᳬश्रयतुप्रउगमुक्थमव्यं थायैस्तभ्नतुबृहत्सामम्प्रतिष्ठित्त्याऽअन्तरिक्षऽऋषयस्त्वाप्प्रथमजादेवेषुदिवोमात्रयाव्वरिम्णाप्प्रथन्तुव्विधर्त्ताचायमधिपतिश्चतेत्त्वासर्व्वेसंविदानानाकस्यपृष्ठे स्वर्गेलोकेयजमानंचसादयंतु ॥ २१ ॥ संम्राडसिसिप्रतीचीदिगादित्यास्तेदेवाऽअधिपतयोव्वरुणोहेतीनाम्प्रतिधर्त्तासप्तदशस्त्वास्तोमःपृथिव्याᳬश्रयतुम रुत्त्वतीयमुक्थमव्यंथायैस्तभ्नतुव्वैरूपᳬसामप्प्रतिष्ठित्याऽअन्तरिक्षऽऋषयस्त्वाप्प्रथमजादेवेषुदिवोमात्रयाव्वरिम्णाप्प्रथन्तुव्विधर्त्ताचायमधिपतिश्चतेत्त्वासर्व्वेसंविदानानाकस्यपृष्ठे ॥ २२ ॥ स्वराडस्युदीचीदिङ्मरुतस्तेदेवाऽअधिपतयꣳसोमोहेतीनाम्प्रतिधर्तैकविᳬशस्त्वास्तोमःपृथिव्याᳬश्रयतुनिष्कैवल्यमुक्थमव्यंथायैस्तभ्नातुव्वैराजᳬसामप्प्रतिष्ठित्याऽअन्तरिक्षऽ

ऋषयस्त्वाप्प्रथमजादेवेषुदिवोमात्रयाव्वरिम्णाप्प्रथन्तुव्विधर्त्ताचायमधिपतिश्चतेत्त्वासर्वेसँव्विदानानाकस्यपृष्ठेस्वर्गेलोकेयजमानंचसादयन्तु ॥ २३ ॥ अधिपत्न्यसिबृहतीदिग्विश्वेतेदेवाऽअधिपतयोबृहस्पतिर्हेतीनाम्प्रतिधर्त्तात्रिणवत्रयस्त्रिᳪशौत्त्वास्तोमौपृथिव्याᳪश्रयतांवैश्वदेवाग्निमारुतेऽउक्थेऽअव्यथायैस्तभ्नीताᳪशाक्वररैवतेसामनीप्प्रतिष्ठित्याऽअन्तरिक्षऽऋषयस्त्वाप्प्रथमजादेवेषुदिवोमात्रयाव्वरिम्णाप्प्रथमन्तुव्विधर्त्ताचायमधिपतिश्चतेत्त्वासर्वेसँव्विदानानाकस्यपृष्ठेस्वर्गेलोकेयजमानंचसादयंतु ॥ २४ ॥ अयम्पुरोहरिकेशःसूर्यरश्मिस्तस्यरथगृत्सश्चरथौजाश्चसेनानीग्रामण्यौपुञ्जिकस्थलाचक्रतुस्थलाचाप्सरसौदङ्क्ष्णवः पशवोहेतिःपौरुषेयोव्वधःप्प्रहेतिस्तेभ्योनमोऽअस्तुतेनोवन्तुतेनोमृडयन्तुतेयंद्विष्मोयश्चनोद्वेष्टितमेषांजम्भेद-

ध्मः ॥ २५ ॥ अयंदक्षिणाव्विश्वकर्म्मातस्यरथस्वन-
श्चरथंचित्रश्चसेनानीग्रामण्योमेनकाचंसहजन्याचाप्स
रसौयातुधानाहेतीरक्षांᳬसिप्रहेतिस्तेभ्योनमोऽअस्तु
तेनोवन्तुतेनोमृडयन्तुतेयंद्विष्मोयश्चनोद्वेष्टितमेषांज-
म्भेदध्मः ॥ २६ ॥ अयम्पश्चाद्विश्वव्यचास्तस्य-
रथप्रोतश्चासंमरथश्चसेनानीग्रामण्योप्रम्लोचंतीचानु-
म्लोचंतीचाप्सरसौव्याघ्याहेतिःसर्पाःप्रहेतिस्तेभ्यो-
नमोऽअस्तुतेनोवंतुतेनोमृडयन्तुतेयंद्विष्मोयश्चनोद्वे-
ष्टितमेषाञ्जम्भेदध्मः ॥ २७ ॥ अयमुत्तरात्संयद्वसु
स्तस्यताक्ष्र्यश्चारिष्टनेमिश्चसेनानीग्रामण्यौव्विश्वाची-
चघृताचीचाप्सरसावापोहेतिर्व्वातःप्रहेतिस्तेभ्योनमो
ऽअस्तुतेनोवन्तुतेनोमृडयन्तुतेयंद्विष्मोयश्चनोद्वेष्टित-
मेषांजम्भेदध्मः ॥ २८ ॥ अयमुपरि । अयमुपर्य्य-
र्वाग्वसुस्तस्यसेनजिच्चसुषेणश्चसेनानीग्रामण्यौउर्व-

शींचपूर्वचित्तिश्चाप्सरसौवबस्फूर्जन्हेतिर्विद्युत्प्रहेतिस्तेभ्योनमोऽअस्तुतेनोवन्तुतेनोमृडयन्तुतेयंद्विष्मोयश्चनोद्वेष्टितमेषांजम्भेदध्मः ॥ २९ ॥ ॐ मुतऽऋषयःप्रातिं ॥ ३० ॥ मंत्रोक्ताऋषयस्तृप्यंताम् ॥ ( वंशानांब्राह्मणम् ) अथवंशःसमानमासाजीवीपुत्रात्साजीवीपुत्रोमाण्डूकायनेर्माण्डूकायनिर्माण्डव्यान्माण्डव्यःकौत्सात्कौत्सोमाहित्थेर्माहित्थिर्वामकक्षायणाद्वामकक्षायणोवात्स्याद्वात्स्यःशाण्डिल्याच्छाण्डिल्यःकुश्रेःकुश्रिर्यज्ञवचसोराजस्तंबायनाद्यज्ञवचाराजस्तंबायनस्तुरात्कावषेयात्तुरःकावषेयःप्रजापतेःप्रजापतिर्ब्रह्मणोब्रह्मस्वयंभुर्ब्रह्मणेनमः ॥ वंशोक्ताऋषयस्तृप्यंताम् १ अथवंशस्तदिदंवयंशौर्पणाय्याच्छौर्पणाय्योगौतमाद्गौतमोवात्स्याद्वात्स्योवात्स्याच्चपाराशर्य्याच्चपाराशर्य्यःसांकृत्याच्चभारद्वाजाच्चभारद्वाज-

ऽऔदवाहेश्च शाण्डिल्याच्च शाण्डिल्यो वैजवापाच्च गौत-
माच्च गौतमो वैजपायनाच्च वैष्टपुरेयाच्च वैष्टपुरेयः शा-
ण्डिल्याच्च रौहिणायनाच्च रौहिणायनः शौनकाच्चात्रेया-
च्च रैभ्याच्च रैभ्यः पौतिमाष्यायणाच्च कौण्डिन्यायनाच्च
कौण्डिन्यायनः कौण्डिन्यात्कौंडिन्यः कौंडिन्यात्कौं-
डिन्यः कौंडिन्याच्चाग्निवेश्याच्च ॥ २ ॥ अग्निवेश्यऽ-
सैतवात्सैतवः पाराशर्य्यात्पाराशर्य्यो जातूकर्ण्याज्जातू
कर्ण्यो भारद्वाजाद्भारद्वाजो भारद्वाजाच्चासुरायणाच्च गौत
माच्च गौतमो भारद्वाजाद्भारद्वाजो वैजपायनाद्वैजपाय-
नः कौशिकायनेः कौशिकायनिर्घृतकौशिकाद्घृतकौ-
शिकः पाराशर्य्यायणात्पाराशर्य्यायणः पाराशर्य्यात्पा
राशर्यो जातूकर्ण्याज्जातूकर्ण्यो भारद्वाजाद्भारद्वाजो भार
द्वाजाच्चासुरायणाच्च यास्काच्चासुरायणास्त्रैवणेस्त्रैवणिरौ
पजंधनेरौपजंधनिरासुरेरासुरिर्भारद्वाजाद्भारद्वाजऽआ-

त्रेयात् ॥ ३ ॥ आत्रेयादात्रेयो माण्टेर्माण्टिर्गौतमाद्गौत-
मो गौतमाद्गौतमो वात्स्याद्वात्स्यः शाण्डिल्याच्छाण्डि-
ल्यः कैशोर्यात्काप्यात्कैशोर्यः काप्यः कुमारहारिता-
त्कुमारहारितो गालवाद्गालवो विदर्भीकौण्डिन्याद्विद-
र्भीकौण्डिन्यो वत्सनपातो बाभ्रवाद्वत्सनपाद्बाभ्रवः प
थः सौभरात्पंथाः सौभरोऽयास्यादाङ्गिरसादयास्य आ
ङ्गिरस आभूतेस्त्वाष्ट्रादाभूतिस्त्वाष्ट्रो विश्वरूपात्त्वाष्ट्रा
त् विश्वरूपस्त्वाष्ट्रोऽश्विभ्यामश्विनौ दधीच आथर्वणाद्द-
ध्यङ्ङाथर्वणो देवादुथर्वा दैवो मृत्योः प्राध्वंसनान्मृत्युः
प्राध्वंसनः प्राध्वंसनात्प्राध्वंसन एकर्षेरेकर्षिर्वि
प्रजित्तेर्विप्रजित्तिर्व्यष्टेर्व्यष्टिः सनारोः सनारुः सनात
नात्सनातनः सनगात्सनगः परमेष्ठिनः परमेष्ठी ब्रह्मणो-
ब्रह्म स्वयंभु ब्रह्मणे नमः । वंशोक्ता ऋषयस्तृप्यंताम् ॥
॥ ४ ॥ अथ वंशः तदिदं वयं शौर्पणाय्याच्छौर्प-

णायोगौतमाद्गौतमोव्वात्स्याद् व्वात्स्योवात्स्याच्चपा-
राशर्य्याच्चपाराशर्य्यः सांकृत्याच्चभारद्वाजाच्चभारद्वाज
औदवाहेश्चशाण्डिल्याच्चशाण्डिल्योवैजवापाच्चगौत-
माच्चगौतमोव्वैजवापायनाच्चव्वैष्टपुरेयाच्चव्वैष्टपुरेयः
शाण्डिल्याच्चरौहिणायनाच्चरौहिणायनःशौनकायाच्च
जैवंतायनाच्चरैभ्याच्चरैभ्यःपौतिमाष्यायणाच्चकौंडि-
न्यायनाच्चकौण्डिन्यायनःकौण्डिन्याभ्यांकौण्डिन्य-
ऽऔर्णवामेभ्यऔर्णवामाःकौण्डिन्यात्कौण्डिन्यः
कौण्डिन्यात्कौण्डिन्यःकौण्डिन्याच्चाग्निवेश्याच्च ॥
॥ ९ ॥ आग्निवेश्यःसैतवात्सैतवःपाराशर्य्यात्पा-
राशर्य्योजातूकर्ण्याज्जातूकर्ण्योभारद्वाजाद्भारद्वाजो-
भारद्वाजाच्चासुरायणाच्चगौतमाच्चगौतमोभारद्वाजाद्भा-
रद्वाजोवलाकाकौशिकाद्वलाकाकौशिकः काषायणा-
त्काषायणःसौकरायणात्सौकरायणस्त्रैवणेस्त्रैवणिरौ-

पजंघनेरौपजंघनिः सायकायनात्सायकायनः कौशिकायनेः कौशिकायनिर्घृतकौशिकाद्धृतकौशिकः पाराशर्यायणात्पाराशर्यायणः पाराशर्यात्पाराशर्योजातूकर्ण्याज्जातूकर्ण्यो भारद्वाजाद्भारद्वाजो भारद्वाजाच्चासुरायणाच्च यास्काच्चासुरायणस्त्रैवणेस्त्रैवणिरौपजंघनेरौपजंघनिरासुरेरासुरिर्भारद्वाजाद्भारद्वाजोऽआत्रेयात् ॥ ६ ॥ आत्रेयादात्रेयो माण्टेर्माण्टिर्गौतमाद्गौतमो गौतमाद्गौतमो वात्स्याद्वात्स्यः शाण्डिल्याच्छाण्डिल्यः कैशोर्यात्काप्यात्कैशोर्यः काप्यः कुमारहारितात्कुमारहारितो गालवाद्गालवो विदर्भीकौण्डिन्याद्विदर्भीकौण्डिन्यो वत्सनपातो बाभ्रवाद्वत्सनपाद्बाभ्रवः पथः सौभरात्पन्थाः सौभरोऽयास्यादाङ्गिरसादयास्य आङ्गिरस आभूतेस्त्वाष्ट्रादाभूतिस्त्वाष्ट्रो विश्वरूपात्त्वाष्ट्राद्विश्वरूपस्त्वाष्ट्रोऽश्विभ्यामश्विनौ दधीच आथर्व-

णादध्यङ्ङाथर्वणोदैवादथर्वादैवोमृत्योःप्राध्वꣳसना-
न्मृत्युप्राध्वꣳसनात्प्राध्वꣳसनऽएकर्षेरेकर्षिर्विप्रजित्ते
र्विप्रजित्तिर्व्यष्टेर्व्यष्टिःसनारोःसनारुःसनातनात्सना
तनःसनगात्सनगःपरमेष्ठिनःपरमेष्ठीब्रह्मणोब्रह्मस्वयं
भुब्रह्मणेनमः॥वंशोक्ताऋषयस्तृप्यंताम् ॥ ७॥ अथ-
व्वꣳशस्तदिदंवयंभारद्वाजीपुत्राद्भारद्वाजीपुत्रोव्वा-
त्सीमांडवीपुत्राद्वात्सीमांडवीपुत्रःपाराशरीपुत्रात्पारा
शरीपुत्रोगार्गीपुत्राद्गार्गीपुत्रःपाराशरीकौंडिनीपुत्रात-
पाराशरीकौंडिनीपुत्रोगार्गीपुत्राद्गार्गीपुत्रोगार्गीपुत्रा-
द्गार्गीपुत्रोवाडेयीपुत्राद्वाडेयीपुत्रोमौषिकीपुत्रान्मौषि-
कीपुत्रोहारिकर्णीपुत्राद्धारिकर्णीपुत्रोभारद्वाजीपुत्राद्भा-
रद्वाजीपुत्रःपैङ्गीपुत्रात्पैङ्गीपुत्रःशौनकीपुत्राच्छौन-
कीपुत्रः ॥ ८ ॥ काश्यपीवालाक्यामाठरीपुत्रात्
काश्यापीवालाक्यामाठरीपुत्रःकौत्सीपुत्रात्कौत्सीपु-

त्रोवौधीपुत्राद्वौधीपुत्रःशालङ्कायनीपुत्राच्छालङ्काय-
नीपुत्रोव्वार्षगणीपुत्राद्वार्षगणीपुत्रोगौतमीपुत्राद्गौतमी
पुत्रऽआत्रेयीपुत्रादात्रेयीपुत्रोगौतमीपुत्राद्गौतमीपुत्रोव्वा
त्सीपुत्राद्वात्सीपुत्रोभारद्वाजीपुत्राद्भारद्वाजीपुत्रःपारा-
शरीपुत्रात्पाराशरीपुत्रोव्वार्कारुणीपुत्राद्वार्कारुणी–
पुत्रऽआर्त्तभागीपुत्रादार्त्तभागीपुत्रःशौङ्गीपुत्राच्छौङ्गी-
पुत्रःसांकृतीपुत्रात्सांकृतीपुत्रः ॥ ९ ॥ आलंबीपु–
त्रादालंबीपुत्रऽआलंवायनीपुत्रादालंवायनीपुत्रो–
जायन्तीपुत्राज्जायन्तीपुत्रोमांडूकायनीपुत्रान्मांडू-
कायनीपुत्रोमांडूकीपुत्रान्मांडूकीपुत्रःशांडिलीपुत्रा-
च्छांडिलीपुत्रोराथीतरीपुत्राद्राथीतरीपुत्रःक्रौंचिकी-
पुत्राभ्यांक्रौंचिकीपुत्रोवैदभृतीपुत्राद्वैदभृतीपुत्रोभालु-
कीपुत्राद्भालुकीपुत्रःप्राचीनयोगीपुत्रात्प्राचीनयोगी-
पुत्रःसांजीवीपुत्रात्सांजीवीपुत्रःकार्शकेयीपुत्रात्कार्श-

केयीपुत्रः ॥ १० ॥ प्राश्नीपुत्रादासुरीवासिनः प्राश्नीपुत्र आसुरायणादासुरायण आसुरेरासुरिर्याज्ञवल्क्याद्याज्ञवल्क्य उद्दालकादुद्दालकोरुणादरुण उपवेशेरुपवेशिः कुश्रेः कुश्रिर्व्वाजश्रवसो वाजश्रवा जिह्वावतो वाध्योगाज्जिह्वावान्वाध्योगोसितादार्षगणादसितोव्वार्षगणो-हरितात्कश्यपाद्धरितः कश्यपः शिल्पात्कश्यपाच्छिल्पः कश्यपः कश्यपान्नैध्रुवेः कश्यपो नैध्रुविर्व्वाचो व्वागम्भिण्या अम्भिण्यादित्यादादित्यानि मानि शुक्लानि-यजूंषि व्वाजसनेयेन याज्ञवल्क्येनाख्यायन्ते॥ ११ ॥ वंशोक्ताऋषयस्तृप्यंताम् । इमावेव गौतमभारद्वाजावयमेव गौतमोयंभारद्वाज इमावेव व्विश्वामित्रजमदग्नी अयमेव व्विश्वामित्रोयंजमदग्निरिमावेव व्वसिष्ठकश्यपावयमेव व्वसिष्ठोयंकश्यपो व्वागेवात्रिर्व्वाचाह्यन्नमद्यते तिहवैनामैतद्यदत्रिरितिसर्व्वस्यात्ता भवतिसर्व्वमस्यान्नम्भव-

तियऽएवँव्वेद ॥ १२ ॥ ब्राह्मणोक्ता ऋषयस्तृप्यंताम् । ॐ तत्सवितुरिति चतुर्वारं गायत्रीं पठेत् । इति प्रति वंशवंशोक्तानामृषीणां तर्पणम् । ततः सर्वे ॐ विरताः स्म इति सकृदुच्चैर्ब्रूयुः ॥

## ॥ अथाध्ययनक्रमः ॥

अध्यायाः ॥ ॐ इषेत्वोर्जेत्वावायवस्थदेवोवः सविताप्रार्पयतुश्रेष्ठतमायकर्मणऽआप्यायध्वमघ्न्याऽइन्द्रायभागम्प्रजावतीरनमीवाऽअयक्ष्मामावस्तेनऽईशतमाघशꣳसोध्रुवाऽअस्मिन्गोपतौस्यातबह्वीर्यजमानस्यपशून्पाहि ॥ १ ॥ कृष्णोऽस्याखरेष्ठोऽग्नयेत्वाजुष्टंप्रोक्षामि॥वेदिरसिबर्हिषेत्वाजुष्टंप्रोक्षामिबर्हिरसिस्रुग्भ्यस्त्वाजुष्टंप्रोक्षामि ॥ २ ॥ समिधाग्निंदुवस्यतघृतैर्बोधयतातिथिम् ॥ आस्मिन्हव्याजुहोतन ॥ ३ ॥ एदमगन्मदेवयजनंपृथिव्यायत्रदेवासोऽअजुषन्तविश्वेऽऋक्सा

माभ्यांᳪसन्तरन्तोयजुर्भीरायस्पोषेणसमिषामदेमऽइ
माऽआपःशमुमेसन्तुदेवीःओषधेत्रायस्वस्वधितेमैनᳬ-
हिᳬसीः ॥ ४ ॥ अग्नेस्तनूरसिविष्णवेत्वासोम-
स्यतनूरसिविष्णवेत्वातिथेरातिथ्यमसिविष्णवेत्वा-
श्येनायत्वासोमभृतेविष्णवेत्वाग्नयेत्वारायस्पोषदेवि-
ष्णवेत्वा ॥ ५ ॥ देवस्यत्वासवितुःप्रसवेऽश्विनो-
र्बाहुभ्यांपूष्णोहस्ताभ्याम ॥ आददेनार्यसिइदमहᳬ-
रक्षसांग्रीवाऽअपिकृन्तामि॥ यवोसियवयास्मद्वेषायव-
यारातीः ॥ दिवेत्वान्तरिक्षायत्वापृथिव्यैत्वाशुन्धन्तां-
लोकाःपितृषदनाःपितृषदनमसि ॥ ६ ॥ वाचस्पतये
पवस्ववृष्णोऽअᳬशुभ्यांगभस्तिपूतःदेवोदेवेभ्यःपवस्व
येषाभागोऽसि ॥ ७ ॥ उपयामगृहीतोऽसिआदित्ये-
भ्यस्त्वाविष्णऽउरुगायैषतेसोमस्तुᳬरक्षस्वमात्वादभन्
॥ ८ ॥ देवसवितःप्रसुवयज्ञं प्रसुवयज्ञपतिंभगाय

दिव्योगंधर्वः केतपूः केतंनः पुनातुवाचस्पतिर्वाजंनः स्वदतुस्वाहा ॥ ९ ॥ अपोदेवामधुमतीरगृभ्णन्नूर्जस्वतीराजस्वश्चितानाः ॥ याभिर्मित्रावरुणावभ्यषिंचन्याभिरिन्द्रमनयन्नत्यरातीः ॥ १० ॥ युंजानः प्रथमंमनस्तत्त्वायसविताधियं अग्नेर्ज्योतिर्निचाय्यपृथिव्याऽअध्याभरत् ॥ ११ ॥ दृशानोरुक्मऽउर्व्याव्यद्यौद्दुमर्षमायुः श्रियेरुचानः अग्निरमृतोऽअभवद्वयोभिर्यदेनंद्यौरजनयत्सुरेताः ॥ १२ ॥ मयिगृह्णाम्यग्रेऽअग्निर्ठंरायस्पोषायसुप्रजास्त्वायसुवीर्य्यायमामुदेवताः सचंताम् ॥ १३ ॥ ध्रुवासिधरुणास्तृताविश्वकर्मणा ... ध्रुवाक्षितिर्ध्रुवयोनिर्ध्रुवासिध्रुवंयोनिमासीदसाधुया ॥ उख्यस्यकेतुंप्रथमंजुषाणाऽअश्विनाध्वर्यूसादयतामिहत्वा ॥ १४ ॥ अग्नेजातान्प्रणुदनः सपत्नान्प्रत्यजातान्नुदजातवेदः अधिनोब्रूहिसुमनाऽअहेडँस्तवस्यामशर्मस्त्रिवरूथउद्भौ ॥

॥ १५ ॥ नमस्तेरुद्रमन्यवऽउतोतऽइषवेनमः॥ बाहु-भ्यामुततेनमः ॥ १६ ॥ अस्मन्नूर्जंपर्वतेशिश्रियाणामद्भ्यऽओषधीभ्योवनस्पतिभ्योऽअधिसम्भृतंपयः तांनऽइषमूर्जंधत्तमरुतःसर्ठ्रराणाऽअश्मंस्तेक्षुन्मयितऊर्ग्यंद्विष्मस्ततेशुगृच्छतु ॥१७॥ व्वाजश्चमे प्रसवश्चमेप्रयतिश्चमेप्रसितिश्चमेधीतिश्चमेक्रतुश्चमेस्वरश्चमेश्लोकश्चमेश्रावश्चमेश्रुतिश्चमेज्योतिश्चमेस्वश्चमेयज्ञेनकल्पंताम् ॥ १८ ॥ स्वाद्वीन्त्वास्वादुनातीव्रांतीव्रेणामृतामृतेनमधुमतीमधुमतासृजामिसर्ठ्सोमेनसोमोऽस्यश्विभ्यांपच्यस्वसरस्वत्यपच्यस्वऽइन्द्रायसुत्राम्णेपच्यस्व ॥ १९ ॥ क्षत्रस्ययोनिरसिक्षत्रस्यनाभिरसिमात्वाहिर्ठसीन्मामाहिर्ठसीः ॥ २० ॥ इमंमेव्वरुणश्रुधीहवमद्याचमृडयत्वामवस्युराचके ॥ २१ ॥ तेजोऽसिशुक्रममृतमायुष्याऽआयुर्मेपाहि॥देवस्यत्वास

वितुः प्रसवेऽश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्यामाददे २२॥
हिरण्यगर्भः समवर्तताग्रे भूतस्य जातः पतिरेक आसी-
त् ॥ स दाधार पृथिवीं द्यामुतेमां कस्मै देवाय हविषा विधे-
म ॥ २३ ॥ अश्वस्तूपरो गोमृगस्ते प्राजापत्याः ॥ कृ-
ष्णग्रीव आग्नेयो रराटे पुरस्तात्सारस्वती मेष्यधस्ताद्ध-
न्वोराश्विनावधोरामौ बाह्वोः सौमापौष्णः श्यामो ना-
भ्यां सौर्ययामौ श्वेतश्च कृष्णश्च पार्श्वयोस्त्वाष्ट्रौ लोमश-
सक्थौ सक्थ्योर्वायव्यः श्वेतः पुच्छ इन्द्राय स्वपस्याय वेह
द्वैष्णवो वामनः ॥ २४ ॥ शादं दद्भिरवकां दन्तमूलै-
र्मृदं बर्स्वैस्तेगान्दंष्ट्राभ्यां सरस्वत्या अग्रजिह्वं जि-
ह्वाया उत्सादमवक्रन्देन तालु वाजं हनुभ्यामप आस्येन
वृषणमाण्डाभ्यामादित्याञ्श्मश्रुभिः पन्थानं भ्रूभ्यां द्यावा-
पृथिवी वर्त्तोभ्यां विद्युतं कनीनकाभ्यां शुक्लाय स्वाहा कृ-
ष्णाय स्वाहा पार्याणि पक्ष्माण्यवार्या इक्षवोऽवार्याणि

पक्ष्माणिपार्श्वाऽइक्षवं॑ ॥ २५ ॥ अग्निश्चपृथिवीच-
सन्नंतेतेमेसन्नंमतामदोवायुश्चांतरिक्षंचसन्नंतेतेमेसन्नंम-
तामदऽआदित्यश्चद्यौश्चसन्नंतेतेमेसन्नंमतामदऽआपश्चव
रुणश्चसन्नंतेतेमेसन्नंमतामदः॥सप्तसंसदोअष्टमीभूत-
साधनीसकामा २ ॥ ऽअध्वंनस्कुरुसंज्ञानमस्तुमेऽमु-
ना ॥ २६ ॥ समास्त्वाग्नऽऋतवोवर्धयन्तुसंवत्स-
राऽऋषयोयानिसत्यासंदिव्येनदीदिहिरोचनेनविश्वा-
ऽआभाहिप्रदिशश्चतस्रः ॥ २७ ॥ होतायक्षत्समिधे
न्द्रमिडस्पदेनाभापृथिव्याऽअधि॥दिवोवर्ष्मन् समि-
ध्यतऽओजिष्ठश्चर्षणीसहांवेत्वाज्यस्यहोतर्यज ॥२८॥
समिद्धोऽअञ्जनकृदरंमतीनांघृतमग्नेमधुमत्पिन्वमानः
॥ वाजीवहन्वाजिनंजातवेदोदेवानांवक्षिप्रियमासध-
स्थम् ॥ २९ ॥ देवसवितःप्रसुवयज्ञंप्रसुवयज्ञपतिं-

भर्गायदिव्योगंधर्वःकेतपूःकेतन्नःपुनातुवाचस्पतिर्वा-
जंन्नःस्वदतु ॥ ३० ॥ सहस्रशीर्षापुरुषःसहस्राक्षःस
हस्रपात् ॥ सभूमिंठ्सर्वतस्पृत्वात्यंतिष्ठद्दशाङ्गुलम् ॥
॥ ३१ ॥ तदेवाग्निस्तदादित्यस्तद्वायुस्तदुचंद्रमाः ॥
तदेवशुक्रंतद्ब्रह्मताऽआपःसप्रजापतिः॥३२॥ अस्या-
जरांसोदमामरित्राऽअर्चद्धूमासोऽअग्नयः पावकाः ॥
श्वितीचयः श्वात्रासोभुरण्यवोवनर्षदोवायवोनसोमाः
॥ ३३ ॥ यज्जाग्रतोदूरमुदैतिदैवंतदुसुप्तस्यतथैवैति॥
दूरङ्गमज्ज्योतिषांज्योतिरेकंतन्मेमनः शिवसंकल्पम-
स्तु ॥ ३४ ॥ अपेतोयंतुपणयोऽसुम्नादेवपीयवः॥
अस्यलोकःसुतावतः॥द्युभिरहोभिरक्तुभिर्व्यक्तंयमोद-
दात्ववसानमस्मै ॥३५॥ ऋचंवाचंप्रपद्येमनोयजुःप्र-
पद्येसामप्राणंप्रपद्येचक्षुःश्रोत्रंप्रपद्येवागोजः सहोजोम-
यिप्रणापानौ ॥ ३६ ॥ देवस्यत्वासवितुःप्रसवेऽश्वि

नौबाहुभ्यांपूष्णोहस्ताभ्याम् ॥ आददेनारिरसि ॥ ३७॥ देवस्यंत्वासवितुः प्रसवेश्विनोर्बाहुभ्यांपूष्णोहस्ताभ्याम् ॥ आददेऽदित्यैरास्नासि ॥ ३८ ॥ स्वाहाप्राणेभ्यः साधिपतिकेभ्यः ॥ पृथिव्यैस्वाहाऽअग्नयेस्वाहाऽन्तरिक्षायस्वाहा ॥ वायवेस्वाहादिवेस्वाहासूर्यायस्वाहा ॥ ३९ ॥ ईशावास्यमिदꣳसर्वंयत्किंचजगत्यांजगत् ॥ तेनत्यक्तेनभुञ्जीथामागृधःकस्यस्विद्धनम् ॥ ॥४०॥ हिरण्मयेनपात्रेणसत्यस्यापिहितम्मुखम् ॥ योसावादित्येपुरुषःसोऽसावहम् १ ॐ २ खंब्रह्म । अध्यायोक्ताऋषयस्तृप्यन्ताम् ॥

अथ शतानि ॥ ॐइषेत्वोर्जेत्वा० ॥ १ ॥ परितेधन्वनोहेतिरस्मान्वृणक्तुविश्वतः ॥ अथोयऽइषुधिस्तवारे अस्मन्निधेहितम् १६ । १२ ॥ २ ॥ अग्नेनयसुपथारायेऽअस्मान्विश्वानिदेववयुनानिविद्वान् । युयोध्य-

स्मज्जुहुराणमेनोभूयिष्ठांतेनमऽउक्तिंविधेम ५ । ३६ ॥ ३ ॥ उपयामगृहीतोसिसुशर्मासिसुप्रतिष्ठानोबृहदुक्षा-यनमः॥ विश्वेभ्यस्त्वादेवेभ्यऽएषतेयोनिर्विश्वेभ्यस्त्वा-देवेभ्यः ८ । ८ ॥ ४ ॥ सोमस्यत्विषिरसितवेवमेत्वि-षिर्भूयात्मृत्योःपाहिऽओजोसिसहोस्यमृतमसि १० । ५ । ५ ॥ परस्याऽअधिसंवतोवराँ २॥ ऽअभ्यातर ॥ यत्राहमस्मितां २ ॥ ऽअव ११ । ७१ ॥ ६ ॥ अ-न्न्यावोऽअन्न्यामवत्वन्न्यान्यस्याऽउपावत ॥ ताःस-र्व्वाःसंविदानाऽइदंमेप्रावताव्वचः १२ । ८८ ॥ ॥ ७ ॥ राज्ञ्यसिप्राचीदिक्विराडसिदक्षिणादिक्-सम्राडसिप्रतीचीदिक्स्वराडस्युदीचीदिगधिपत्न्या-सिबृहतीदिक् १४ । १३ ॥ ८ ॥

नमोहिरण्यबाहवेसेनान्यदिशांचपतयेनमोनमोवृक्षे-भ्योहरिकेशेभ्यःपशूनांपतयेनमोनमःशष्पिंजराय-

त्विषींमतेपथीनाम्पतंयेनमोनमोहरिंकेशायोपवीतिनें पुष्टानांपतंयेनमोनमोंबभ्लुशायं १६। १७॥९॥ इंद्रें मंप्रंतरांनंयसजाताानांमसद्वशीसमेंनंवर्चंसासृजदेवानां भागदाऽअंसत् १७ । ८१॥ १०॥ इमौतैंपक्षाव- जरौंपतत्रिणौयाभ्याछंरक्षांछंस्यपहछंस्यंग्नेताभ्यांप- तेमसुकृतांमुलोकंयत्रऽऋषंयोजग्मुःप्रंथमजाःपुराणाः १८। ८२॥ ११॥ अन्नांत्पारिश्रुतोरसंब्रह्मणा० १९। ७८॥ १२॥ अश्विनातेजंसाचक्षुःप्राणेन सरंस्वतीवीर्यंम् ॥ वाचेंद्रोबलेनेन्द्रायदधुरिन्द्रियम् २०। ८०॥ १३॥ पृथिव्यैस्वाहान्तरिंक्षायस्वा- हांदिवेस्वाहासूर्यांयस्वाहांचंद्रायस्वाहानक्षंत्रेभ्यःस्वा- हौषधीभ्यःस्वाहावनस्पतिंभ्यःस्वाहांपारिप्लवेभ्यःस्वा हांचराचरेभ्यःस्वाहांसरीसृपेभ्यःस्वाहा २२।२९॥ १४॥ प्रजापंतयेचवायवेचगोमृगोवरुंणायारण्योमेषो

समायकृष्णोमनुष्यराजायमर्कट÷शार्दूलायरोहित्वृष-
भायंगवयीक्षिप्रश्येनायवर्तिकानीलङ्गोःकृमि÷समुद्रा
यंशिशुमारोहिमवतेहस्ती२४।३०॥१५॥तेऽअस्यसो-
षणेदिव्येनयोनाउषासानक्ता ॥इमंयज्ञमवतामध्वरंनं
÷२७। १७॥ १६ ॥तनूनपात्पथऽऋतस्ययानान्म-
ध्वासमञ्जन्स्वदयासुजिह्वमन्मानिधीभिरुतयज्ञमृध-
न्देवत्राचकृष्णुह्यध्वरंनं÷२९।२६ ॥ १७ ॥ अयमि-
हप्रथमोधायिधातृभिर्होतायजिष्ठोऽअध्वरेश्वीड्य÷यम-
प्नवानोभृगवोविरुरुचुर्वनेषुचित्रंविभ्वंविशेविशे २३।
६ ॥ १८ ॥ अनुनोऽद्यानुमतिर्यज्ञंदेवेषुमन्यतामअ-
ग्निश्चहव्यवाहनोभवतंदाशुषेमय÷॥१९॥इयत्यग्रऽआ
सीन्मखस्यतेद्यशिरोराध्यासंदेवयजनेपृथिव्याःमखा-
यत्वामखस्यत्वाशीर्ष्णे ३७।५ ॥ २० ॥

अथ कण्डिकाः ॥ व्रतमुपैष्यम् ॥ १ ॥ सर्वेक

पालान्यवान्यतरऽउपदधाति ॥ २ ॥ सवैस्रुचःसंमा-
र्ष्टि ॥ ३ ॥ हिङ्कृत्यान्वाह ॥ ४ ॥ सवैप्रवरायाश्रा-
वयति ॥ ५ ॥ ऋतवोहवैदेवेषुयज्ञेभागमीषिरे॥ ६ ॥
सर्व्वैपर्णशाखयाव्वत्सानपाकरोति॥७॥ मनवेहव्वैप्रा-
तः ॥ ८ ॥ सयत्राह ॥ ९ ॥ ससमुद्राइतश्चेतश्च
संभरन्ति ॥१०॥ उद्धृत्याहवनीयम्पूर्णाहुतिंजुहोति॥
॥ ११ ॥ सूर्योहवाऽअग्निहोत्रम् ॥ १२ ॥ अथहुते
ऽग्निहोत्रमुउपतिष्ठते ॥ १३ ॥ प्रजापतिर्हव्वाऽइदम-
ग्रऽएकऽएवास ॥ १४ ॥ पित्रामहाहव्विषाहवैदेवाव्वृ-
त्रञ्जघ्नुः ॥ १५ ॥ देवयजनंजोषयन्ते ॥१६ ॥ दक्षि-
णेनाहवनीयंप्राचीनग्रीवेकृष्णाजिनेऽउपस्तृणाति ॥
॥ १७ ॥ सप्तपदान्यनुनिष्क्रामति ॥ १८ ॥ शिरो-
व्वैयज्ञस्यातिथ्यंबाहूप्रायणीयोदनीयौ ॥ १९ ॥ तद्य
एषपूर्वार्ध्यौव्वार्षिष्ठस्थूणराजोभवति ॥ २० ॥ उदरमे-

वास्यसदः ॥ २१ ॥ अग्निमादत्ते ॥ २२ ॥ तद्य-
त्रैतत्प्रवृत्तोहोताहोतृषदनऽउपविशति ॥ २३ ॥ प्रजा-
पतिर्व्वैप्रजाःससृजानोरिरिचानऽइमामन्यत ॥ २४ ॥
प्राणोहव्वाऽअस्योपाᳬंशुः ॥ २५ ॥ चक्षुषीहव्वाऽ
अस्यशुक्रामन्थिनौ ॥ २६ ॥ भक्षयित्वासमुपहूताः
स्मऽइत्युक्त्वोत्तिष्ठति ॥ २७ ॥ मनोहवाऽअस्यसविता ॥
॥ २८ ॥ आदित्येनचरुणोदयनीयेनप्रचरती ॥ २९ ॥
प्रजापतिर्व्वाऽएषयदर्ठᳬंशुः ॥ ३० ॥ देवाश्ववाअसुरा-
श्च ॥ ३१ ॥ अथस्रुवञ्चाज्यविलापनींचादाय ॥ ३२ ॥
अरण्योरग्नीसमारोह्य ॥ ३३ ॥ केशान्स्यपुरुषस्य ॥
॥ ३४ ॥ आग्नेयोष्टाकपालःपुरोडाशोभवति ॥ ३५ ॥
असद्वाऽइदमग्रऽआसीत् ॥ ३६ ॥ प्रजापतिरग्निरूपा-
ण्यभ्यधारयत् ॥ ३७ ॥ द्वितीयम् एतद्वैदेवाऽअब्रुवन् ॥
॥ ३८ ॥ अथैनमतःस्तुनत्येव ॥ ३९ ॥ पर्णकषा-

यनिष्पक्काऽएताऽआपोभवंति ॥ ४० ॥ भूयाᳬंसिह-
वीᳬंषिभवन्ति ॥ ४१ ॥ रुक्मम्प्रतिमुञ्चबिभर्त्ति ॥
॥ ४२ ॥ व्वनीवाह्येताग्निंविभ्रदित्याहुः ॥ ४३ ॥
गार्हपत्यंचेष्यन्पलाशशाखयाव्युदूहति ॥ ४४ ॥
अथातोनैर्ऋतिर्हरन्ति ॥ ४५ ॥ चितोगार्हपत्योभ-
वति ॥ ४६ ॥ आत्मन्यग्निंगृह्णीतेचेष्यन् ॥ ४७ ॥
कूर्म्ममुपदधाति ॥ ४८ ॥ प्राणभृतउपदधाति ॥
॥ ४९ ॥ द्वितीयांचितिमुपदधाति ॥ ५० ॥ तृती-
यांचितिमुपदधाति ॥ ५१ ॥ चतुर्थींचितिमुपदधाति
॥ ५२ ॥ पंचमींचितिमुपदधाति ॥ ५३ ॥ ना-
कसदउपदधाति ॥ ५४ ॥ ऋतव्याउपदधाति ॥
॥ ५५ ॥ अथातःशतरुद्रियंजुहोति ॥ ५६ ॥ उप-
वसथीवेहन्प्रातरुदितआदित्ये ॥ ५७ ॥ अथातोवै-
श्वानरंजुहोति ॥ ५८ ॥ अथातोराष्ट्रभृतोजुहोति ॥

॥ ५९ ॥ अथातःपयोव्रततायै ॥ ६० ॥ अग्निरेष-
पुरस्ताच्चीयते ॥ ६१ ॥ प्रजापतिःस्वर्गंलोकमजिगा-
ᳬंसत् ॥ ६२ ॥ प्राणोगायत्री ॥ ६३ ॥ प्रजापतिं-
व्विस्रस्तम् ॥ ६४ ॥ तस्यवाएतस्याग्नेः ॥ ६५ ॥
अथहैतेरुणे ॥ ६६ ॥ सँवत्सरोवैयज्ञःप्रजापतिः ॥
॥ ६७ ॥ त्रिर्हवैपुरुषोजायते ॥ ६८ ॥ व्वाग्घवा-
एतस्याग्निहोत्रस्याग्निहोत्री ॥ ६९ ॥ उद्दालकोहा-
रुणिः ॥ ७० ॥ उर्वशीहाप्सराः ॥ ७१ ॥ भृगुर्ह-
वैवारुणिः ॥ ७२ ॥ पशुबंधनयजते ॥ ७३ ॥ तद्य-
थाहवै ॥ ७४ ॥ अयंवैयज्ञोयोयंपवते ॥ ७५ ॥ स-
मुद्रंवाएतेप्रचरन्ति ॥ ७६ ॥ यद्वालोके ॥ ७७ ॥
दीर्घसत्रᳬंहवाएतउपयन्ति ॥ ७८ ॥ तदाहुर्यदेषदी-
र्घसत्री ॥ ७९ ॥ सोमोवैराजायज्ञःप्रजापतिः ॥ ८० ॥
व्विश्वरूपँव्वैत्वाष्ट्रमिंद्रोहन् ॥ ८१ ॥ इन्द्रस्यवैयत्र ॥

॥ ८२ ॥ एतस्माद्वैयज्ञात्पुरुषोजायते ॥ ८३ ॥ ब्रह्मौदनंपचति ॥ ८४ ॥ प्रजापतिर्देवेभ्योयज्ञान्व्यादिशत् ॥ ८५ ॥ प्रजापतेरक्ष्यस्वयत्॥८६॥उत्तमं प्रजापतिरकामयत् ॥ ८७ ॥ अथप्रातर्गोतमम्य ॥ ॥ ८८ ॥ पुरुषोहनारायणोकामयत ॥ ८९ ॥ ब्रह्म वैस्वयंभुतपोतप्यत ॥ ९० ॥ अथास्मैश्मशानंकुर्वं तिद्यौःशान्तिः॥ ९१ ॥ देवाहवैसत्रंनिषेदुः ॥ ९२ ॥ अथातोरौहिणौजुहोति ॥ ९३ ॥ सवैतृतीयेहन् ॥ ॥ ९४ ॥ द्वयाहप्राजापत्याः ॥ ९५ ॥ दृप्तबालाकिर्हा नूचानोगार्ग्यआस ॥ ९६ ॥ जनकोहवैदेहः ॥ ॥ ९७ ॥ जनकर्ठंहवैदेहंयाज्ञवल्क्योजगाम ॥ ९८॥ पूर्णमदःपूर्णमिदम् ॥ ९९ ॥ श्वेतकेतुर्हवाआरुणेयः ॥ ॥ १०० ॥ प्राश्नीपुत्रादासुरिवासिनः चतुर्दशकाण्डेष्वध्यायोक्ता ऋषयस्तृप्यंताम् ॥

अथ प्रपाठकाः । व्रतमुपैष्यन् ॥ १ ॥ चतुर्द्धा विहितोहवाअग्रेग्निरास ॥ २ ॥ तेवाआर्द्राःस्युः ॥ ॥ ३ ॥ सस्रुचोत्तरमाघारमाघारयिष्यन् ॥ ४ ॥ यज्ञेनवैदेवाः ॥ ५ ॥ यज्ञेनवैदेवादिवमुपोदक्रामन् ॥ ॥ ६ ॥ सर्वैस्रुचोव्यूहति ॥ ७ ॥ ससद्राइतश्चेतश्चसंभरति ॥८॥ वरुणोहैनद्राज्यकामआदधे ॥९ ॥ यत्रवै-प्रजापतिःप्रजाःससृजे ॥ १० ॥ प्रजापतिर्हवाएतेनाग्रेयज्ञेनेजे ॥ ११ ॥ महाहविषाहवैदेवावृत्रंजघ्नुः ॥ ॥ १२ ॥ देवयजनंजोषयन्ते ॥ १३ ॥ वाचंयच्छति ॥ १४ ॥ नीडेकृष्णाजिनमास्तृणाति ॥ १५ ॥ तद्यएषपूर्वोध्योवपिष्ठस्थूणाराजोभवति ॥ १६ ॥ विजामानोहैवास्यधिष्ण्याः ॥ १७ ॥ पाशकृत्वाप्रतिमुञ्चति ॥ १८ ॥ सोत्युपयजति ॥ १९ ॥ प्राणोहवाअस्योपांशुः ॥ २० ॥ आत्माहवाअस्या-

ग्रयणः ॥ २१ ॥ ग्रंतिवाएतद्यज्ञम् ॥ २२ ॥ सवा-
अवभृथमभ्यवैति ॥ २३ ॥ तद्यत्रैतद्द्वादशाहेनव्यूढच्छं
दसायजते ॥ २४ ॥ देवाश्चवाअसुराश्च ॥ २५ ॥
बार्हस्पत्येनचरुणाप्रचरति ॥ २६ ॥ सवाअपऽसंभ-
रति ॥ २७ ॥ मैत्रावरुण्यापयस्ययाप्रचरति ॥२८॥
असद्वाइदमग्रआसीत् ॥ २९ ॥ प्राजापत्यंचरुंकाआ-
लंभते ॥ ३० ॥ प्रदीताएतेग्नयोभवन्ति ॥ ३१ ॥
तस्याएतस्याआषाढांपूर्वांकरोति ॥ ३२ ॥ रुक्मंप्र-
तिमुंचबिभर्ति ॥ ३३ ॥ गार्हपत्यंचेष्यन्पलाशशा-
खयाव्युदूहति ॥ ३४ ॥ अथदर्भस्तंबमुपदधाति ॥
॥ ३५ ॥ आत्मन्नग्निंगृह्णीतेचेष्यन् ॥ ३६ ॥ कूर्ममु-
पदधाति॥३७॥प्राणभृतउपदधाति॥३८॥ अथविश्व-
ज्ज्योतिषमुपदधाति ॥ ३९ ॥ अथातोवृतम् ॥४०॥
गार्हपत्यमुपदधाति ॥ ४१ ॥ अथातःशतरुद्रियंजु-

होति ॥ ४२ ॥ प्रत्येत्यग्निंप्रहरिष्यन् ॥ ४३ ॥ अथैतानयज्ञक्रतूञ्जुहोति ॥ ४४ ॥ अथप्रातः ॥४५॥ प्रातरनुवाकमुपाकरिष्यन् ॥ ४६ ॥ अग्निरेषपुरस्ताच्चीयते ॥ ४७ ॥ अथातश्चयनस्यैव ॥ ४८ ॥ संवत्सरोवैप्रजापतिरग्निः ॥ ४९ ॥ नेववाइदमग्रेसदासीन्नैवसदासीत् ॥ ५० ॥ संवत्सरोवैयज्ञःप्रजापतिः॥ ॥ ५१ ॥ अपिहवाएतर्हि ॥ ५२ ॥ प्रजापतिर्वैप्रजाः सृजमानोतप्यत ॥ ५३ ॥ अथातःस्वाध्यायप्रशंसा ॥ ५४ ॥ अयंवैयज्ञोयोयंपवते ॥ ५५ ॥ पुरुषंहनारायणंप्रजापतिरुवाच ॥ ५६ ॥ सोमोवैराजायज्ञःप्रजापतिः ॥ ५७ ॥ प्रजापतिर्यज्ञमसृजत ॥ ॥ ५८ ॥ ब्रह्मौदनंपचति ॥ ५९ ॥ नियुक्तेषुपशुषु॥ ॥ ६० ॥ प्रमुच्याश्वंदक्षिणेनवेदिम् ॥ ६१ ॥ पुरुषोहनारायणोऽकामयत् ॥ ६२ ॥ देवाहवैसत्रन्निषेदुः ॥ ६३ ॥

मयत्रैताꣳहोताचाह ॥ ६४ ॥ द्वयाहप्राजापत्याः ॥ ॥ ६५ ॥ द्दप्तावालाकिर्हानूचानोगार्ग्यआस ॥ ६६ ॥ अथहैनंभुज्युर्लाह्यायनिःपप्रच्छ ॥ ६७ ॥ जनकꣳहवैदेहंयाज्ञवल्क्योजगाम ॥ ६८ ॥ भूमिरंतरिक्षंद्यौरिति ॥ ६९ ॥ प्राश्नीपुत्रादासुरीवासिनः ॥ ७० ॥ इति चतुर्दशकांडे प्रपाठोक्ता ऋषयस्तृप्यंताम् ॥ इति प्रपाठकाः ॥

अथ शतस्थानानि ॥ व्रतमुपैष्यन् ॥ १ ॥ तद्यदेवंपिनष्टि ॥ २ ॥ अथाजलिताभ्यांपवित्राभ्याम् ॥ ॥ ३ ॥ बृहच्छौचायविष्टयेति ॥ ४ ॥ व्वसूनाꣳरात्रौस्याम ॥ ५ ॥ अग्निर्वैदेवानामद्धातमाम् ॥ ६ ॥ तद्यथायोनौरेतःसिञ्चेत् ॥ ७ ॥ तांवैप्राश्नंत्येव ॥ ८ ॥ अथव्वेदपत्नीव्विस्त्रꣳसयति॥९॥ असंवैयज्ञोयोयंपवते ॥ १० ॥ अथयदस्तमेति ॥ ११ रेवतीरमध्यमिति ॥

॥ १२ ॥ सवाआग्नेयोष्टाकपालःपुरोडाशोभवति ॥
॥ १३ ॥ तद्येसोमेनेजानाः ॥ १४ ॥ अथोत्तरेण-
शालांपरिश्रयन्ति ॥ १५ ॥ अथोल्लिखति ॥ १६ ॥
सायाबभ्रुःपिंङ्गाक्षीसासोमक्रयणीस्यात् ॥ १७ ॥
प्रथमंतेदेवाः ॥ १८ ॥ इंद्रघोषःप्रोक्षणीरध्वर्युराद-
त्ते ॥ १९ ॥ साहाकद्रूरुवाच ॥ २० ॥ तद्यएतउ-
च्छ्रितादेवाहवैयज्ञन्तन्वानाः ॥ २१ ॥ अथपार्श्वेन-
वासिनावाप्रयौति ॥ २२ ॥ सजुहोतिशृणोत्वग्निःस-
मिधाहवंमइति ॥ २३ ॥ इयर्ठंहवाउपाꣳशुः॥२४॥
तस्यासावेवद्रुवआयुः ॥ २५ ॥ यत्रद्यावापृथिव्यर्ठं
शस्यते ॥ २६ ॥ सआज्यस्योपस्तीर्यद्विश्चरोखद्यति॥
॥२७॥इन्द्रोहवैषोडशी॥२८॥तासांद्वादशगर्भाः२९॥
द्वितीयातद्येहस्मपुराव्वाजपेयेनयजंते ॥ ३० ॥ अथ
दिशोनुवीक्ष्यमाणोजपति ॥ ३१ ॥ सवैदीक्षते॥३२॥

अथैतमभिषेकंकृष्णविषाणयानुविमृष्टे ॥ ३३ ॥ षडेवोत्तरेचखः ॥ ३४ ॥ अथोआहुःप्रजापतिरेवविस्रस्तः ॥ ३५ ॥ अमावास्यायांदीक्षते ॥ ३६ ॥ अश्वस्यपदेजुहोति ॥ ३७ ॥ अथैनांधूपयति ॥ ॥ ३८ ॥ तमुपरिनाभिबिभर्ति ॥ ३९ ॥ अथोखान्निवपति ॥ ४० ॥ द्वितीयाचतस्रःसीतायजुषाकृषति ॥ ॥ ४१ ॥ तंप्रत्यंचयन्तम् ॥४२॥ अपाङ्गभत्सीदेति॥ ॥ ४३ ॥ तस्यमनोवैश्वकर्मणमिति ॥ ४४ ॥ तद्येषामध्यमास्वयमातृण्णा ॥ ४५ ॥ एकादशभिरस्तुवतेति ॥ ४६ ॥ तावाएतादशेष्टकाउपदधाति ॥४७॥ अथस्वयंतृणमुपदधाति ॥ ४८ ॥ अथोत्तरार्द्धेनप्राक् ॥ ४९ ॥ सयःसवैश्वानरइमेसलोकाः ॥ ५० ॥ यास्तेऽअग्नेसूर्येरुचः ॥ ५१ ॥ नामकृत्वाथैनमुपतिष्ठते ॥ ५२ ॥ यावाइयंवेदिःसप्तविधस्य ॥ ५३ ॥

अयमेवाकाशोजूः ॥ ५४ ॥ सोयमात्मात्रेधाविहीत एव ॥ ५५ ॥ अथवर्ठंशः ॥ ५६ ॥ अथयामेतामाहुतिंजुहोति ॥ ५७ ॥ अथयदनुवाक्यामनूच्य ॥५८॥ ब्रह्मचार्यसीत्याह ॥ ५९ ॥ सयत्पशुबन्धेनयजतेऽग्नीनेवैतत्पुनर्नवाकुरुते ॥ ६० ॥ दशेतिहोवाच ॥ ६१ । अथयत्रस्कन्नर्ठंस्यात् ॥ ६२ ॥ अथयदिप्रस्तुतः ॥ ६३ ॥ सर्वअश्विनाभवन्ति ॥ ६४ ॥ प्रजापतिर्यज्ञमसृजत ॥ ६५ ॥ किंवावपनंमहदिति ॥ ६६ ॥ अथयोस्यनिष्कःप्रतिमुक्तोभवति ॥ ६७ ॥ एतेनहेन्द्रोतोदैवापःशौनकः ॥ ६८ ॥ चतस्रःसीतायजुषाकृषति ॥ ६९ ॥ अथोत्तरतःसिकताउपकीर्णाभवन्ति ॥ ७० ॥ अथरौहिणौजुहोति ॥ ७१ ॥ तेदेवा अब्रुवंस्तावद्वाऽइदर्ठंसर्वयदन्तम् ॥ ७२ ॥ तानियद्गृह्णाति ॥ ७३ ॥ योग्नौतिष्ठन् ॥ ७४ ॥ कतम-

आत्मेति ॥ ७५ ॥ अथहैनंमनुष्याऊचुः ॥ ७६ ॥ अथयामिच्छेद्दुर्भन्दधीतेति ॥ ७७ ॥ सप्तसहस्रषट्शतशेषंचतुर्विंशतिः ॥ ७८ ॥ प्राश्नीपुत्रादासुरीवासिनः ॥ ७९ ॥ इति चतुर्दशकाण्डे शतोक्ता ऋषयस्तृप्यन्ताम् ॥

अथ व्रतं विसृजते ॥ १ ॥ सवस्मिहर्ताविमंल्लोकमेति ॥ २ ॥ अथनिग्राम्याभ्योग्रहान्विगृह्णते ॥ ३॥ अथगृहपतिःसुब्रह्मण्यामाह्वयति ॥ ४ ॥ तावाएताः॥ ॥ ५ ॥ तानिदशभवंति ॥ ६ ॥ ताएताऽअङ्गुलयः॥ ॥ ७ ॥ मध्यमेवतृतीयांचितिः ॥ ८ ॥ सहोवाच ॥ ॥ ९ ॥ अथव्वर्ठंशः ॥ १० ॥ तस्माउहैतदवाच ॥ ॥ ११ ॥ सवाएषआत्मैवयत्सौत्रामणि ॥ १२ ॥ मर्यादायाएवलोष्टमाहत्य ॥ १३ ॥ प्राश्नीपुत्रादासुरीवासिनः ॥१४॥ इतिअंत्यकण्डिकोक्ताऋषयस्तृप्यंताम् ॥

एवंव्रतंविसृजेत् ॥ १ ॥ परमांगतिङ्गच्छतीति ॥ ॥ २ ॥ तस्माद्धोतृचमसात् ॥ ३ ॥ तस्मिन्त्समुपहूवमिष्ट्वासमिधोभ्यादधति ॥ ४ ॥ द्वादशवात्रयोदशवादक्षिणाभवंति ॥ ५ ॥ यावानग्निर्यावत्यस्यमात्रा तावद्भवति ॥ ६ ॥ तस्मात्समानसंबंधनाः ॥ ७ ॥ तस्मादिमंप्राणाऽउपरिष्टादसंछन्नाः ॥ ८ ॥ संवादेनैवर्त्विजोलोकाऽइति ॥ ९ ॥ ब्रह्मणोब्रह्मस्वयंभुब्रह्मणेनमः ॥ १० ॥ केशिनीरेवैमाआप्येतर्हिप्रजाजायंते ॥ ॥ ११ ॥ तस्मादिमावात्मानमभितोबाहू ॥ १२ ॥ तस्मादुहैतज्जीवाश्चपितरश्चनसंदृश्यन्ते ॥ १३ ॥ वाजसनेयेनयाज्ञवल्क्योनाख्यायन्ते ॥ १४ ॥ अन्त्यपंक्तिकोक्ताऋषयस्तृप्यन्ताम् ॥ इत्यन्त्यपङ्क्तिका ॥
॥ ॐ अग्निमीळेपुरोहितंयज्ञस्यदेवमृत्विजम् ॥ होतारंरत्नधातमम् ॥ १ ॥ इषेत्त्वोर्ज्जेत्वा० ॥ २ ॥

अग्नऽआयाहिवीतयेगृणानोहव्यदातये ॥ निहोतासत्सिबर्हिषि ॥ ३ ॥ शन्नोदेवी० ॥ ४ ॥ इत्यध्ययनम् ( नमस्कारः ) ततः ॐ तदेतदृचाभ्युक्तंनमृषाश्रांतंयदवंतिदेवाऽइतिनहैवेवंविदुषःकिञ्चनमृषाश्रान्तंभवतितथोहास्यैतत्सर्वेदेवाऽअवन्ति ॥ १ ॥ इति नमस्कारः ॥

अथ ऋषिश्राद्धम् ॥ कृतप्राणायामो देशकालौ संकीर्त्य । ॐ उत्सर्गाङ्गभूतमृषिश्राद्धमहं करिष्ये । इति संकल्प्य ॐ इदं विष्णु० इति मंत्रेण दिग्बंधः । ऋषिश्राद्धस्योपहाराः शुचयो भवन्तु इत्युपहारप्रोक्षणम् । देशकालपात्रसंपदस्तु ॐ अरुंधतीसहितकश्यपादिऋषीणामिदमासनंयथायथाविभागंवास्वाहानमः ॥ अरुंधतीसहितकश्यपादय ऋषयः यथादत्तगंधाद्यर्चनं यथायथाविभागं वः स्वाहा नमः ॥ इति गंधादिदानम् ॥ ऋषिश्राद्धसांगतासिद्ध्यर्थं सप्तसंख्याकान् ब्राह्मणान् यथाकालेन यथासंपन्नान्नेन

तर्पयिष्यं तेन अरुन्धतीसहितकश्यपादयऋषयः प्रीयन्ताम ॥ऋषिश्राद्धसांगतासिद्ध्यर्थं हिरण्यनिष्क्रयभूतां दक्षिणामाचार्याय तुभ्यमहं संप्रददे ॥ ततः आचार्यः । ॐ कोदादितिमंत्रं पठेत् । उपविष्टेषु ब्राह्मणेषु उदकादिदानम् ॥ तद्यथा ॐ शिवा आपः संतु सौमनस्यमस्तु । अक्षतं चारिष्टं चास्तु । अघोरा ऋषयः संतु । सन्त्विति प्रतिवचनम् । उत्सर्गकर्मणो न्यूनातिरिक्तदोषपरिहाराय भूयसीं दक्षिणां दद्यात् । तत उत्सर्गांगभूतमृषिश्राद्धं परिपूर्णमस्तु अस्तु परिपूर्णमिति विप्रा वदेयुः । ततः ॐ सहनौऽस्तुसहनोऽवतुसहनऽइंद्रंवीर्यंवदस्तुब्रह्मइन्द्रस्तद्वेदयेन यथा नविद्विषामह इति ॐ उभाकवीषु वा यो नोधर्मःपरापततपरिसख्यस्यधर्मिणो विसख्यानिविसृजामह इति च सर्वे जपेयुः विरताःस्मेति प्रब्रूयुः ॥ इत्यृषिश्राद्धम् ॥ अथ विसर्जनम् । ॐ उत्तिष्ठब्रह्मणस्पतेदेवयन्तंस्त्वेमहे ॥ उपप्रयन्तुमरुतःसुदानवऽइंद्रप्राशूर्भवासचा ॥ ॥ १ ॥ स्वस्वप्रवरान्विसर्जयित्वाजलेप्रवाहयेत् । ॐ

समुद्रङ्गच्छस्वाहान्तरिक्षङ्गच्छस्वाहादेवꣳसवितारङ्गच्छस्वाहामित्रावरुणौगच्छस्वाहाहोरात्रेगच्छस्वाहाछंदाꣳसिगच्छस्वाहाद्यावापृथिवीगच्छस्वाहायज्ञङ्गच्छस्वाहासोमङ्गच्छस्वाहादिव्यन्नभोगच्छस्वाहाग्निंवैश्वानरङ्गच्छस्वाहामनोमेहार्दियच्छदिवन्तेधूमोगच्छतुस्वर्ज्योतिःपृथिवींभस्मनापृणस्वाहा ॥२॥ ततो द्विराचमनं कुर्युः ॥ अनेनाध्यायोत्सर्गकर्माङ्गत्वेन कृतेन ऋषिपूजनतर्पणादिकर्मणा श्रीभगवान् परमेश्वरः प्रीयतां न मम ॐ तत्सद्ब्रह्मार्पणमस्तु ॥ इति श्रावणीप्रयोगः समाप्तः ॥

अथ रक्षाबंधनमस्यामेव पूर्णिमायां भद्रारहितायां कार्यम् । तत्रादौ अपराह्ने । सर्षपाक्षतहेमसहितां विचित्रक्षौमवस्त्रैर्वा कार्पासतंतुभिर्ग्रथितां शुभां रक्षापोटलिकां शुद्धभाजने संस्थाप्य कुंकुमाक्षतैरभ्यर्च्य ब्राह्मणान्संपूज्य दक्षिणाभिः संतोष्य पूर्वमुखो ब्राह्मणद्वारा रक्षाबंधं कुर्यात् ॥ तत्र मंत्रः ॥ येन बद्धो

बली राजा दानवेंद्रो महाबलः ॥ तेन त्वामभिबध्नामि रक्षे मा चल मा चल ॥ १ ॥ इति । अनेन विधिना यस्तु रक्षाबंधं समाचरेत् ॥ स सर्वदोषरहितः सुखी संवत्सरं भवेत् ॥ १ ॥ इति रक्षाविधानम् ॥

अथ गोत्रनिर्णयः ॥ तत्र चतुर्विंशतिगोत्राणि ( तथा च मनुः ) । शाण्डिल्यः काश्यपश्चैव वात्स्यः सावर्णकस्तथा ॥ भरद्वाजो गौतमश्च सौकालीनस्तथापरः ॥ १ ॥ कल्पिषश्चाग्निवेश्यश्च कृष्णात्रेयवसिष्ठकौ ॥ विश्वामित्रः कुशिकश्च कौशिकश्च तथापरः ॥ २ ॥ घृतकौशिकमौद्गल्यौ आलम्यानः पराशरः ॥ सौपायनश्च चित्रश्च वासुकी रोहितस्तथा ॥ ३ ॥ वैयाघ्रपद्यकश्चैव जामदग्न्यस्तथापरः ॥ चतुर्विंशति वै गोत्राःकथिताः पूर्वपण्डितैः ॥ ४ ॥ ( तत्रैव ) जमदग्निर्भरद्वाजो विश्वामित्रात्रिगौतमाः ॥ वसिष्ठकाश्यपागस्त्या मुनयो गोत्रकारिणः ॥ १ ॥ एतेषां यान्यपत्यानि तानि गोत्राणि मन्यते ॥ ( धनंजयप्रदीपे कुलदीपिकायां च ) सौकालीनकमौद्गल्यौ पराशरबृहस्पती ॥ कांचनो विष्णुकौशिक्यौ कात्या-

यनात्रेयकाण्वकाः ॥ १ ॥ कृष्णात्रेयः सांकृतिश्च कौण्डिन्यो गर्गसंज्ञकः ॥ आङ्गिरस इति ख्यातः अनावृकाख्यसंज्ञितः ॥ २ ॥ अव्यजैमिनिवृद्धाख्याः शाण्डिल्योवात्स्य एव च ॥३॥ सावर्ण्यालम्पायनवैयाघ्रपद्यश्च घृतकौशिकः ॥४ ॥ शक्तिः काण्वायनश्चैव वासुकी गौतमस्तथा ॥ शुनकः सौपायनश्चैव मुनयो गोत्रकारिणः ॥ एतेषां यान्यपत्यानि तानिगोत्राणि मन्यते ॥ ५ ॥ सर्वेचत्वारिंशद् गोत्राः ॥ ४० ॥ यस्य विस्मरणादिना गोत्रनाशस्तस्य काश्यपं गोत्रम् ॥ गोत्रनाशे तु काश्यपमिति हेमाद्रौ व्याघ्रोक्तेः ॥ सर्वाःप्रजाः काश्यप्य इति श्रुतेश्च ॥ इति गोत्रनिर्णयः ॥ अथ प्रवरनिर्णयः ॥ प्रवरा गोत्रप्रवर्त्तकमुनिव्यावर्त्तको मुनिगणः)॥तथा च ॥ जमदग्निगोत्रस्य जमदग्न्यौर्व्ववसिष्ठास्त्रिप्रवराः ३।भरद्वाजगोत्रस्य भरद्वाजाङ्गिरसबार्हस्पत्याः ३। विश्वामित्रगोत्रस्य विश्वामित्रमरीचिकौशिकाः ३ । अत्रिगोत्रस्य अत्र्यात्रेयशातातपाः ३ । गौतमगोत्रस्य गौतमवसिष्ठबार्हस्पत्याः ३ । वसिष्ठगोत्रस्य वसिष्ठशक्तिपराशराः ३ । केषाञ्चित्त वसिष्ठात्रिसांकृतयः ३। काश्यपगोत्रस्यकाश्यपावत्सार-

नैध्रुवाः ३ । अगस्त्यगोत्रस्य अगस्तिदधीचिजैमिन-
यः ३। सौकालिनगोत्रस्य सौकालिनाङ्गिरसबार्हस्प-
त्यावत्सारनैध्रुवाः ५ । मौद्गलगोत्रस्य और्वच्यवन-
भार्गवजमदग्न्याप्नवन्तः ५ । पराशरगोत्रस्य पराशर-
शक्तिवसिष्ठाः ३ । बृहस्पतिगोत्रस्य बृहस्पतिकपि-
लपार्वणाः ३ । कांचनगोत्रस्य अश्वत्थदेवलदेवरा-
जाः ३ । विष्णुगोत्रस्य विष्णुवृद्धिकौरवाः ३ । कौ-
शिकगोत्रस्य कौशिकाऽत्रिजमदग्नयः ३ । कात्याय-
नगोत्रस्य अत्रिभृगुवसिष्ठाः ३।आत्रेयगोत्रस्य आत्रेय-
शातातपसांख्याः ३ । काण्वगोत्रस्य काण्वाऽ-
श्वत्थदेवलाः ३ । कृष्णात्रेयगोत्रस्य कृष्णात्रे-
यात्रेयवासाः ३ । सांकृतिगोत्रस्य अव्याहारात्रि-
सांकृतयः ३ । कौण्डिन्यगोत्रस्य कौण्डिन्यस्तिमि-
ककौत्साः ३ । गर्गगोत्रस्य गार्ग्यकौस्तुभमाण्ड-
व्याः ३ । आङ्गिरसगोत्रस्य आङ्गिरसवसिष्ठबार्हस्प-
त्याः ३ । अनावृकाक्षगोत्रस्य गार्ग्यगौतमवसि-
ष्ठाः ३ । अव्ययगोत्रस्य अव्ययबलिसारस्वताः ३ ।
जैमिनिगोत्रस्य जैमिन्युतथ्यसांकृतयः ३ । वृद्धि-

गोत्रस्य कुरुवृद्धाङ्गिरोबार्हस्पत्याः ३ । शाण्डिल्य-गोत्रस्य शाण्डिल्यासितदेवलाः ३ । वात्स्यगोत्रस्य वर्णगोत्रयोः और्व्वच्यवनभार्गवजामदग्न्याप्नवन्तः ५। आलम्बायनगोत्रस्य आलम्बायनशालङ्कायनशाक-टायनाः ३ । वैयाघ्रपद्यगोत्रस्य सांकृतिः १ । घृत-कौशिकगोत्रस्य कुशिककौशिकघृतकौशिकाः ३ । केषाञ्चित् कुशिककौशिकबंधुलाः ३ । शक्तिगोत्रस्य शक्तिपराशरवसिष्ठाः ३। काण्वायनगोत्रस्य काण्वा-यनाङ्गिरसबार्हस्पत्यभरद्वाजाजमीढाः ५ । वासुकि-गोत्रस्य अक्षोभ्यानन्तवासुकयः ३ । गौतमगोत्रस्य गौतमाप्सरोङ्गिरसबार्हस्पत्यनैध्रुवाः ५ । केषाञ्चित् गौतमाङ्गिरसवासाः ३। शुनकगोत्रस्य शुनकशौनक-गृत्समदाः ३ । सौपायनगोत्रस्य और्व्वच्यवनभार्गव-जामदग्न्याप्नवन्तःप्रवराः ॥ ५ ॥ इति धनंजयकृतध-र्म्मप्रदीपे गोत्रप्रवरनिर्णयः समाप्तः ॥ ( उद्वाहतत्त्वे ) क्षत्रियवैश्यशूद्राणामतिदिष्टातिदिष्टगोत्रप्रवरमत एवै-तेषां पुरोहितगोत्रप्रवरमिति ॥ ( तथाचाग्निपुराणे ) क्षत्रियवैश्यशूद्राणां गोत्रं च प्रवरादिकम् ॥ तथान्य-

वर्णसंकराणां येषां विप्राश्च याजकाः ॥ इति गोत्रप्रवरनिर्णयः ॥ ( सह्याद्रिखण्डे ) काहं कोऽहं कुलं किं मे संबंधः कीदृशो मम ॥ स्वस्वधर्मो न लुप्येत तद्वैवं चिंतयेद्बुधः ॥ ( पद्मपुराणेऽपि ) द्विजन्मानो भवेयुः स्म स्वात्मवृत्तांतवेदिनः । आत्मनो ज्ञातिवृत्तांतं यो न जानाति सत्पुमान् ॥ ज्ञातीनां समवायार्थं पृष्टः सन्मूकतां भजेत् ॥ स्वजातिपूर्वजानां यो न विजानाति संभवम् ॥ स भवेत्पुंश्चलीपुत्रसदृशः पितृवेदकः ॥ गोत्रप्रवरशाखादिगोत्रदैवतसंग्रहम् ॥ स्थापनास्थानतादात्म्यं स्थापकस्यादिलक्षणम् ॥ अत्मनः सर्ववृत्तांतं विज्ञेयमिदमादरात् ॥ गोत्रशाखावटंकं च ज्ञातिप्रवरशर्मकम् ॥ देवीं गणपतिं यक्षं नवजातिवाडवाः ॥ इति ॥

अथादिगौडब्राह्मणानामुत्पत्तिः ॥ ( ब्राह्मणोत्पत्तिनिबन्धे ) जनमेजयनामा वै राजा धर्मपरायणः ॥ नीतिमान् सत्यसंधश्च वेदशास्त्रविचक्षणः ॥ १ ॥ आर्यावर्ते च निवसन् पालयन् धर्मतः प्रजा ॥ वटे-

श्वरं मुनिवरं शिष्यवृंदैः समन्वितम् ॥ २ ॥ यज्ञं कर्तुं समाहूय वेदाब्ध्यब्धीन्दु१४४४संमितैः ॥ ततः परमसन्तुष्टो राजा यज्ञं चकार ह ॥ ३ ॥ देवर्षी-स्तोषयामास पूजास्तुत्यभिवादनैः ॥ चक्रे दाना-न्यनेकानि तोषयामास भूसुरान् ॥ ४ ॥ चकारा-वभृथस्नानं गुरुं नत्वातिभक्तितः ॥ महापूजां चका-रादौ दक्षिणां दातुमुद्यतः ॥ ५ ॥ तदा स ऋषिरा-ण्नैव प्रतिग्रहमथाकरोत् ॥ आज्ञां गृहीत्वा नृपतेः स्वदेशगमनं प्रति ॥ ६ ॥ निर्गतांश्च तदा राजा चैकै-कं ग्राममुत्तमम् ॥ लिखित्वा वीटिकामध्ये स्थापयि-त्वा च पत्रकम् ॥ ७ ॥ एकैकं प्रददौ भक्त्या मुनि-शिष्येभ्य एव च ॥ ते तु तांबूलकं मत्वा गृहीत्वा प्रेमपूर्वकम् ॥ ८ ॥ नदीतटं समायाता गंभीरजल-पूरितम् ॥ जलमध्ये यदा पादौ संस्थाप्य गमनं प्रति ॥ ९ ॥ मार्तिं चक्रुस्तदा पादौ मग्नौ तस्या जले ततः ॥ पूर्वं जलप्रतरणं कृत्वा पादेन चागताः ॥१०॥ कथं तद्विपरीतं वै जातमत्राधुना मिथः ॥ कृत्वा विचारं चोद्घाट्य पश्चात्तांबूलवीटिकाम् ॥ ११ ॥

ग्रामदानपत्रिकां वै दृष्ट्वातिविस्मयान्विताः ॥ दानप्रतिग्रहान्नष्टा गतिरस्माकमेव च ॥ १२ ॥ एवं निश्चित्य नृपतिं गत्वा प्रोचुर्द्विजातयः ॥ कथं वै गुप्तमार्गेण दानं दत्तं त्वयाधुना ॥ १३ ॥ तदा प्रोवाच नृपतिः साष्टांगं प्रणिपत्य च ॥ विना वै दक्षिणादानं यज्ञः सांगः कथं भवेत् ॥ १४ ॥ क्षमध्वं चापराधं मे कृपां कृत्वा ममोपरि ॥ एवमुक्त्वा स्वदेशे वै वासयामास तान्द्विजान् ॥ १५ ॥ ते गौडब्राह्मणाः सर्वे गौडदेशनिवासिनः ॥ वेदशास्त्रपुराणज्ञाः श्रौतस्मार्तपरायणाः ॥ १६ ॥ आचारेण विहीनाश्च स्पर्शदोषविवर्जिताः ॥ शाखा माध्यंदिनी तेषां वेदः शुक्लयजुः स्मृतः ॥ ॥ १७ ॥ गोत्राणि गौतमादीनि सूत्रं कात्यायनीयकम्। ( कालिकापुराणे )वंगदेशं समारभ्य भुवनेशान्तसुंदरि ॥ गौडदेशः समाख्यातः सर्वशास्त्रविशारदैः ॥ इति गौडवंशवर्णनं समाप्तम् ॥

अथ ग्रंथालंकारः ॥ बभूव पूर्वं मरुधन्वदेशे बिकोजिनामा नृपतिर्महात्मा ॥ तस्यैव नाम्ना खलु राजधानी लोके बिकानेर इति प्रसिद्धा ॥ १ ॥ तदन्तरे लेखपुरोपमे पुरे श्रीरत्नदुर्गे सुजनैः सुसेविते ॥

आसीद्वसिष्ठान्वयगौडविप्रो माध्यंदिनीयो बुधजीव-
राजः ॥ २ ॥ विवृद्धमानो विदुषां समाजे विज्ञैर्नरैः
सर्वसमृद्धिभोक्ता ॥ तस्यात्मजा बाणमितास्तु सद्गु-
णाः सुवेदवेदांगचणाः सुशीलाः ॥ ३ ॥ आयातया
तद्विजशुद्धचत्वरा वीर्येण सन्ताडितवैरिदुर्जनाः ॥
एतेषु मध्ये गुरुरामकृष्णो ज्ञानेन स्वल्पीकृतसर्वतृष्णः
॥ ४ ॥ स्वबुद्धितः खण्डितवैरिप्रश्नः सुभक्तिसंसर्पित-
देवकृष्णः ॥ तस्याऽभवन्नाम३ मिताः सुपुत्राः स्वधर्म-
यायिस्वकलत्रमित्राः ॥५॥ गृहेषु संलेखितरम्यचित्राः
श्रीकान्तपूजानिरताः पवित्राः ॥ इमानि नामानिभ-
वन्तिःतेषां चतुर्भुजाख्यो विबुधो हि ज्येष्ठः ॥ ६ ॥
कस्तूरिचन्द्राभिधसज्जनोऽपरोऽपरोगुणैर्मण्डितज्येष्ठ-
रामः॥तत्रस्थिता मध्यमपंक्तिपादे कस्तूरिचन्द्राख्यम-
हत्सुशीलाः ॥७॥ तेषां सुपुत्रावनवद्यवंद्यविद्यान्वितौ
द्वौ नितरामभूताम् ॥ चतुर्थिलालाख्यगुरुमुखाख्यौ
सुज्ञौगुणेनार्दितदुष्टदर्पौ ॥ ८ ॥ तत्रापि ज्येष्ठः खलु
पण्डिताग्रणीः षट्शास्त्रवेत्ता षट्कर्मतत्परः ॥परोपका-
रीद्विजदेवभक्तो हुतावशिष्टान्नसदानुरक्तः॥९॥एतादृशो
गौडकुले बभूव चतुर्थिलालो निजधर्मपालः॥ श्रीसा

म्बपादाब्जविलग्नचित्तः शिष्टानुयायी बहुग्रंथकर्ता १०॥
धर्मशास्त्रेषु निष्णातः कर्मकाण्डस्य मर्मवित् ॥ ज्यो-
तिर्वेत्ता भिषक् श्रेष्ठो नानागौडनिबंधकृत् ॥ ११ ॥
तेनेयं रचिता माला द्विजानां नित्यकर्मणाम् ॥
अनया प्रीयतां शंभुर्भवान्या सह सर्वदा ॥ १२ ॥
रस[६]वेदा[४]ङ्क[९]सोमे[१]ऽब्दे विक्रमादित्यसंज्ञके ॥ वैशाखशु-
क्लपंचम्यां पूर्णा मालाऽभवच्छुभा ॥ १३ ॥

इति श्रीवीकानेरराज्यान्तर्गतश्रीरत्नगढनिवासिना श्रीवासिष्ठ-
गोत्रोद्भवेन पंडितश्रीरामकृष्णामरचंद्रशर्मणां पौत्रेण श्रीक-
स्तूरिचंद्रात्मजेन श्रीचतुर्भुजदत्तसूनुना श्रीमहादेव-
भक्तवाजसनेयिना गौडवंशावतंसद्वादश-
महानिबंधकर्त्रा पण्डितश्रीचतुर्थीलाल-
( चौथमल ) शर्मणा विरचिता
नित्यकर्मप्रयोगमाला समाप्ता ॥

॥ शुभमस्तु ॥

---

पुस्तक मिलनेका ठिकाना—
खेमराज श्रीकृष्णदास,
"श्रीवेङ्कटेश्वर" स्टीम् प्रेस—बम्बई.